नन्वस्तु, अन्तरात्मदृष्ट्यैवायं इन्द्रस्योपदेशः; तथापि तदन्तरात्मा नारायण इति कुतस्सिद्धम्। "सर्वोवैरुद्रः" "सर्वोह्येषरुद्र" इत्यादिषु रुद्रस्य सार्वात्म्य श्रवणाद्रुद्र एव तदन्तरात्मा किं न स्यात्। न च "पुरुष एवेदं सर्वं"। "विश्वमेवेदं पुरुष" इत्यादौ नारायणस्यैव सार्वात्म्य श्रवणात्सर्वोवै रुद्र इत्यादिकं सर्वान्तरात्मा नारायण एव रुद्रान्तरात्मा इत्यर्थकतया नेयमितिवाच्यम्; विनिगमनाविरहेण पुरुष एवेदं सर्वमित्यादेस्सर्वान्तरात्मा रुद्र एव नारायणान्तरात्मा इत्यर्थकताप्रसंगस्य दुर्वारत्वात्; इति चेदुच्यते—अथर्वशिरसि देवान्प्रति रुद्रेण स्वसार्वात्म्योपदेशस्य परमात्मात्मकतानिबन्धनताया स्सर्वज्ञेन तेनैव कंठरवेणोक्ततया रुद्रसार्वात्म्यवादिनीनां श्रुतीनामन्यथा सिद्धतया तस्येन्द्रान्तरात्मत्वाऽसिद्धिः।

तथाहि—अथर्वशिरसि श्रूयते; "देवावैस्वर्गं लोकमगमन्। तेदेवारुद्रमपृच्छन्।कोभवानिति। सोब्रवीत्, अहमेकः प्रथममासं वर्तामि भविष्यामि च, नान्यः कश्चिन्मत्तोव्यतिरिक्त" इति। "सोन्तरादंतरं प्राविशद्दिशश्चान्तरं स प्राविशत्। सोहं नित्योऽनित्योहं ब्रह्माहं प्रांचः प्रत्यंचोहम्" इत्यादि। अत्र देवैः कोभवानिति पृष्टो रुद्रः भूतं भविष्यद्वर्तमानं सर्वमहं; मत्तोन्यन्नास्तीति; प्रथमं संग्रहेणाभिधाय, पुनर्विस्तरेण वक्ष्यन्नुक्त वक्ष्यमाणस्ववाक्येषु अहं शब्दार्थविवरणाय मध्ये आह। "सोन्तरादन्तरं प्राविशद्दिशश्चान्तरं स प्राविशत्सोहमिति"। अत्र तच्छब्दः प्रसिद्धपरामर्शी। "तमादेशम प्राक्ष्योयेनाश्रुत" मित्यादिवाक्यस्थतच्छब्दवत्। ततश्च सः=

"अन्तःप्रविष्टः शास्ताजनानां सर्वात्मा," "अन्तर्बहिश्च तत्सर्वं व्याप्यनारायणः स्थितः," "एष सर्वभूतान्तरात्मा ऽपहतपाप्मा दिव्योदेव एकोनारायण" इत्यादिषु प्रसिद्धो नारायणः, अन्तरात्=देहस्यान्तः प्रवि[illegible]ात्प्राणेन्द्रियवर्गात्, अन्तरं=तदन्तःप्रविष्टं जीवात्मानं, प्राविशत्=अन्तरात्मतया प्रविष्टवान् । दिशश्चान्तरं=बहिस्थितानां दिगादीनामन्तरं च सः अन्तरात्मतया प्राविशत् । अतः, अहं सः="अहमेकः प्रथममास" मित्यादि मदुक्तवाक्यस्थाहंशब्दार्थः । मदन्तः प्रविष्टस्सनारायण इति तदर्थः ।

अयंभावः—सर्वस्मिन्नपि वस्तुनि परमात्मनोऽन्तरात्मतयाऽनुप्रविष्टतया सर्वं वस्तु तच्छरीरभूतमिति, तद्वाचकशब्दस्तदन्तरात्मपर्यन्तवाचकः । अतोमदुक्ताहंशब्दार्थोपि मदन्तरात्मा नारायण एव; नत्वहमिति । नच, "नान्यः कश्चिन्मत्तो व्यतिरिक्त इति," इत्यत्र इतिशब्देन रुद्रवाक्यस्य समाप्तिद्योतनात्सोन्तरादन्तरं प्राविशदित्यादिकं न रुद्रवाक्यम् । अपि तु श्रुतिवाक्यमेव । ततश्च अहमेकः प्रथममासमित्यादिना रुद्रेणोक्तं तस्य सार्वात्म्यं तस्य सर्वस्मिन्ननुप्रवेशनिबन्धनमिति श्रुत्यैव रुद्रस्य सर्वान्तर्यामित्वमत्राप्युच्यत इति वाच्यम्; सोन्तरादन्तरं प्राविशदित्यादि वाक्यानन्तरमपि नित्योऽनित्योहं प्रांचः प्रत्यंचोहमित्यादि रुद्रवाक्यानुवृत्तिदर्शनेन मध्ये रुद्रवाक्यस्य समाप्तत्वासिद्धेः । रुद्रवाक्यमध्य पतितस्यास्य रुद्रवाक्यत्वनिश्चयात् । सोन्तरादन्तरमित्यादेः श्रुतिवाक्यत्वे तदनन्तरं सोहं नित्योऽनित्योहमित्यतः पूर्वं

सोब्रवीदिति वाक्यस्याध्याहारप्रसंगात । इति शब्दस्तु स्वस्थानादुत्कृष्य रुद्रवाक्यान्ते योज्यः ।

न चैवं व्यवहितान्वय कल्पन प्रसंग इति वाच्यम्; इति शब्दस्य स्वस्थानान्वये पुनारुद्रवाक्यारम्भे 'सोब्रवीदिति,' रुद्रवाक्यान्ते इतीति च पदत्रयस्याध्याहारप्रसंगेन तदपेक्षया एकस्य इतिशब्दस्य स्वस्थानादुत्कृष्योत्तरत्रान्वयांगीकारस्यैवोचितत्वात् । वस्तुतस्तु; नायमिति शब्दस्समाप्तिवचनः। अपि तु, हेतुवचनः। नान्यः कश्चिन्मत्तोव्यतिरिक्त इति वाक्यार्थस्याहमेकः प्रथम मित्यादि पूर्ववाक्यार्थं प्रति हेतुत्वमितिशब्देनोच्यते। ततश्च, मद्व्यतिरिक्तस्य कस्यचिदभावादहमेक एव भूतभविष्यद्वर्तमानसर्वात्मक इति पिंडितार्थः ।

इत्थं च इति शब्दस्य न स्वस्थानादुत्कर्षकल्पनागौरवम् । न वा सोन्तरादन्तरमित्यादेः रुद्रवाक्यमध्य पतितत्वस्वारस्यसिद्ध रुद्रवाक्यत्वहानिः ।

सर्वगत्वादनन्तस्य स एवाहमवास्थितः ।

इति प्रह्लादवचने यथा परमात्मनस्स्वस्मिन्नन्तः प्रविष्टत्वरूपहेतूक्ति पुरस्सरं प्रह्लादेन परमात्मनोहमिति निर्देशः । एवमिहापि रुद्रेण परमात्मनस्स्वास्मिन्नन्तः प्रविष्टत्वरूपहेतूक्ति पुरस्सरं परमात्मनोहमिति निर्देश इति सुसंगतमेतत्।

इयान् विशेषः—प्रह्लादवचने हेतूक्तिपूर्वकं परमात्मनोहमिति निर्देशः. इहतु, रुद्रमहिमातिशय दर्शनेन तत्तत्वं जिज्ञासमानानां देवानां प्रश्नप्रतिविवक्षया साक्षात्कृत परमात्म-

तत्वेन रुद्रेण प्रथममन्तर्यामिदृष्ट्या अहमेक इत्याद्युक्तिः। पश्चात्स्वोच्चरितेनाऽहंशब्देन स्वस्यैव सार्वात्म्यमुक्तमिति देवानां भ्रमो माभूदिति परमात्मनस्स्वास्मिन्ननुप्रविष्टत्वेन हेतुना तस्यैवाहं शब्देन निर्देश इत्युक्तिरिति।

न चैवं कोभवानिति देवकृतप्रश्नस्य मदन्तरात्मा सर्वात्मा इति प्रतिवचनासंगतिः; कोभवानिति पृष्टे, स्वस्वरूपाभिधानेन प्रतिवचनं हि संगच्छत इति वाच्यम्; यतोत्र प्रतिवचनानुसारेण प्रश्नाशयस्योन्नेयतया तदुन्नीतस्य प्रश्नस्येदृशप्रतिवचनमुपपद्यत एव। अत्र हि सर्वात्मविषय प्रतिवचनदर्शनेन कोभवानिति देवकृत प्रश्नस्याऽयमाशयो ऽवगम्यते; किं भवान् सर्वान्तरात्मा परमात्मा? अथवा अस्मदादिवज्जीवमात्रमिति। अस्यचोत्तरमुक्तं रुद्रेण, मदन्तरात्मा सर्वात्मेति. तेन नाहं परमात्मा, अपि तु जीव एवेति फलितत्वान्नासंगतिः।

यद्यप्यनेन प्रतिवचनेन रुद्रेण स्वस्यैव सार्वात्म्यमुक्तमिति स्वरसतः प्रतीयते। तथापि सोन्तरादन्तरं प्राविशदित्यनन्तरवाक्यविरोधापत्त्या न रुद्रसार्वात्म्यपरत्वमस्य वाक्यस्य युक्तमास्थातुं। सोन्तरादन्तरमित्यादेः श्रुतिवाक्यत्वमभ्युपगम्य, रुद्रोक्तस्वसार्वात्म्यं श्रुतिरुपपादयतीति तन्निर्वाहे, अहमेक इत्यारभ्य धर्मन्धर्मेण तर्पयामि स्वेन तेजसेत्यन्तस्य रुद्रवाक्यतास्वारस्यभंगप्रसंगः। "सोन्तरादन्तरं प्राविशद्दिशश्चान्तरं सप्राविशत्सोह" मित्यत्र चरमस्य तच्छब्दस्य वैयर्थ्यप्रसंगः। इति सोब्रवीदिति रुद्रवाक्यान्ते पदत्रया-

ध्याहारप्रसंगः। नारायणसार्वात्म्यपरानन्यथासिद्धबहुतर श्रुत्यन्तरविरोध प्रसंगश्चेत्यादिकं अन्यत्र प्रपंचितं द्रष्टव्यम् ।

तत्सिद्धमथर्वशिरसि रुद्रेण स्वसार्वात्म्योपदेशोऽन्तर्यामि दृष्ट्येति । सूचितश्चायमर्थः "शास्त्रदृष्ट्यातूपदेशो वामदेववत्" दिति वामदेवशब्देन वामदेवाख्यमृषिं रुद्रंच तन्त्रेण संगृह्णता सूत्रकृता । तदेवमीक्षत्यादिभिः सप्तभिरधिकरणै स्सदानन्दमयादिसामान्यशब्दघटितानां अयोग्यार्थप्रसिद्धाकाशाद्यचेतनवाचि पदघटितानां कारणत्वा योग्येन्द्रादि चेतनविशेषप्रसिद्धेन्द्रादि पदघटितानां च कारणवाक्यानां कारणत्वान्वययोग्ये नारायणे विशेषे पर्यवसानं प्रदर्शितम् । उपदर्शितं च तत्तद्विद्याविचारमुखेन मुमुक्षूणामुपासिसिषोपजननाय नारायणस्यैव परमपुरुषार्थप्रापकत्वं परमपुरुषार्थतया प्राप्यत्वं च ।

तथाहि—ईक्षत्यधिकरणेन परमपुरुषार्थभूतमोक्षप्रदत्वरूपं प्रापकत्वम्; आनन्दमयाधिकरणान्तराधिकरणाभ्यां परमपुरुषार्थतया प्राप्यत्वौपयिकमनवधिकातिशयानन्दादि कल्याणगुणवत्वाप्राकृतस्वासाधारणाकर्मकृतातिरमणीय दिव्यमंगलविग्रहवत्व प्रयुक्त भोग्यता प्रकर्षवत्वं; आकाशाधिकरणेन तादृश भोग्यता प्रकर्षप्रयुक्तं परमप्राप्यत्वं; ज्योतिरधिकरणेन नित्यनिरतिशय विभूतिमत्ता प्रयुक्तभोग्यत्वं; इन्द्रप्राणाधिकरणेनेन्द्रादीनामपि नियन्तृत्वरूपं जगदैश्वर्यं; प्राप्यत्वोपयुक्तं प्रतिपादितं ।

तदयमत्र प्रथमपादनिर्गलितार्थः—स्वरूपरूपगुण विभूतिभिर्निरतिशयभोग्यतया परमपुरुषार्थत्वान्नारायण एव

प्राप्यः । तत्प्राप्त्युपायश्च स एवेति, स एव मुमुक्षुभि-रुपास्योजिज्ञास्यश्चेति ।

एवं चिदचिद्विलक्षणकारणसद्भावरूपायोगव्यवच्छेद-परेण प्रथमपादेन सामान्यशब्दघटितानामर्थान्तर प्रसिद्ध शब्दघटितानांच कारणवाक्यानां योग्यविशेषप्रतिपत्तिसाकां-क्षाणां नारायणे विशेषे पर्यवसानं प्रदर्शितम् । अन्य योग-व्यवच्छेदपरया त्रिपाद्यापि कारणवाक्यानां नारायणएव पर्यवसानं प्रादर्शि ।

तथाहि—त्रिपाद्यां तत्तदधिकरणेषु साध्यवाचक पदमप्रयुज्य त्रिपादीमध्यमपादमध्यमाधिकरणे "ईक्षतिकर्म-व्यपदेशात्स" इत्यत्र स इति साध्यवाचकपदं प्रयुक्त-वतस्सूत्रकारस्याऽयमाशयोऽवगम्यते । त्रिपादीस्थपूर्वोत्तराधि-करणेषु इदमेव स इति पदं साध्यवाचितयाऽन्वेतव्यमिति । ननु कथमस्य मध्यमपादमध्यमाधिकरणत्वमितिचेदित्थं । तृतीयपादे देवताधिकरणादे रधिकरणत्रयस्य प्रासंगिकतया-गर्भाधिकरणतया च सप्तानामेव प्रकृतार्थपरत्वेन चतुर्थस्ये-क्षतिकर्माधिकरणस्य मध्यमत्वमिति ।

अथापि द्वितीयपादे "अत एव च स ब्रह्म" इत्यस्मिन् सूत्रे ब्रह्मेति साध्यनिर्देशाच्चतुर्थपादे "वदतीति चेन्न प्राज्ञोहि प्रकरणा" दित्यत्र प्राज्ञ इति साध्यनिर्देशाच्च ईक्षतिकर्माधिकरणस्थस्य स इत्यस्यैव त्रिपाद्यां साध्यसमर्पकत्व मभिमतमिति कथं निश्चीयत इति चेत् । उच्यते । "अत एव च स ब्रह्मे" त्यत्र ब्रह्मशब्दः "वदतीति चेन्न-

प्राज्ञोहि प्रकरणा" दित्यत्र प्राज्ञशब्दश्च तत्र तत्र प्रकृताक्षेपपरिहार शेषत्वान्न तदधिकरणयोरपि साध्यसमर्पकः। किं पुनः पूर्वोत्तराधिकरणेषु। अपि च त्रिपाद्या अन्ययोगव्यवच्छेदार्थतया तत्र क्वचित्साध्य निर्देशेनैवाऽन्ययोगव्यवच्छेदासिद्धेर्न प्रतिपादं साध्यनिर्देश उचितः।

अत एव हि प्रथमपादे अयोगव्यवच्छेदपरे "भेदव्यपदेशाच्चान्य" इति क्वचिदेव साध्यनिर्देशः कृतः। अतोमध्यमपादमध्यमाधिकरणे, अत्रैव साध्यनिर्देशस्योचिततया तत्रस्थं स इति पदमेव सर्वत्र साध्यसमर्पकमिति युक्तमभ्युपगन्तुं।

अपि च; "जन्माद्यस्य यत" इति ब्रह्मलक्षणेऽभिहिते, कुत इमानि भूतानि जायन्ते? इत्याशंकोदयेन तदनिवृत्तौ निर्विचिकित्स ब्रह्मज्ञानानुदयेन ब्रह्मशब्दवाच्य व्यक्तिविशेषनिर्धारणस्यावश्य कर्तव्यतया तदकरणे न्यूनता प्रसंगेन तत्परिहाराय कारणवाक्यानां क्वचिद्विशेषे पर्यवसानस्यावश्यवाच्यतया ब्रह्मशब्द प्राज्ञशब्दयोश्च सामान्यभूतयोर्विशेषसमर्पकत्वा संभवेन विशेषसमर्पणक्षमस्येक्षातिकर्माधिकरणस्थस्य स इत्यस्यैव त्रिपाद्यां साध्यसमर्पकत्वं सूत्रकाराभिमतामिति अवश्यमंगीकार्यम्।

न च ब्रह्मशब्द प्राज्ञशब्दयोरेव विशेषसमर्पणाक्षमत्वे सर्वनाम्नस्तच्छब्दस्य का कथेति शंक्यम्। वक्ष्यमाणरीत्या तस्य विशेषसमर्पकत्व संभवात्। न चैवम् "अत एव च स ब्रह्म" त्यत्र ब्रह्मेति, द्वितीयपादे सर्वाधिकरणेषु

साध्यनिर्देशः; "वदतीति चेन्नप्राज्ञोहि प्रकरणा" दित्यत्र प्राज्ञ इति चतुर्थपादे सर्वत्र साध्यनिर्देशः; इतीक्षतिकर्माधिकरणश्रुतप्रकाशिकाविरोध इति वाच्यम् । सर्वत्रप्रसिध्यधिकरणादिषु प्रकारान्तरेण साध्यलाभस्य श्रुतप्रकाशिकाया मेवाभिहितत्वेन ब्रह्मशब्दस्य साध्यसमर्पकत्वे श्रुतप्रकाशिकाकृतां नैर्भर्याभावात्। स्पष्टं चेदं पाराशर्यविजये; तत्सिद्धमीक्षति कर्माधिकरणस्थं "स" इति पदमेव त्रिपाद्यां साध्यसमर्पकमिति।

तच्च पुरुषसूक्त नारायणानुवाक सुबालोपनिषदादिप्रसिद्ध नारायणाख्य देवता विशेषपरामर्शी। तदधिकरण विषय वाक्य श्रुतलिंगैस्तस्यैव प्रत्यभिज्ञायमानत्वेन तस्यैव परामर्शौचित्यात्। "यः पुनरेतं त्रिमात्रेणोमित्यनेनैवाक्षरेण परं पुरुषमभिध्यायीत । स तेजसि सूर्ये संपन्नो यथा पादोदरस्त्वचा विनिर्मुच्यते एवं हैव सपाप्मना विनिर्मुक्तस्ससामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते । तदेतौ श्लोकौ भवतः

तिस्रोमात्रामृत्युमत्यः प्रयुक्ता
अन्योन्य सक्ता अनविप्रयुक्ताः ।
क्रियासु बाह्याभ्यन्तरमध्यमासु
सम्यक् प्रयुक्तासु न कम्पते ज्ञः ।
ऋग्भिरेतं यजुर्भिरन्तरिक्षं
ससामभिर्यत्तत्कवयो वेदयन्ते ।
तमोंकारेणैवायनेनान्वेति विद्वान्

यत्तच्छान्तमजरममृतमभयं परं चेती" तिहि तदाधिकरणविषयवाक्यम् ।

अत्र ईक्षणकर्मपुरुषसंबन्धितया श्रुतैः पुरिशयत्वं परात्परत्वं मुक्तोपसृप्यत्वं शान्तत्व मजरत्व ममृतत्व मित्यादिभि र्नारायणः प्रत्यभिज्ञाप्यते । पुरिशयनं हि हृदयपुंडरीकोदरवर्तित्वम् । तद्धि नारायणानुवाके नारायणस्य श्रुतम् । यथा—

"यच्च किंचिज्जगत्यस्मिन्दृश्यते श्रूयतेऽपिवा ।
अन्तर्बहिश्च तत्सर्वं व्याप्यनारायणस्थित" इत्युपक्रम्य
"पद्मकोशप्रतीकाशं हृदयं चाप्यधोमुखम् ।
अधोनिष्ट्या वितस्त्यान्तु नाभ्या मुपरि तिष्ठति ।
हृदयं तद्विजानीयाद्विश्वस्यायतनं महत्" इत्यभिधाय
"तस्याः शिखायामध्ये परमात्मा व्यवस्थित" इति ।

एवं सुबालोपनिषदि सप्तमखंडे "अन्तः शरीरे निहितोगुहायामज एकोनित्यः । यस्य पृथिवीशरीरम् । यः पृथिवीमन्तरे संचर" न्नित्युपक्रम्य, "एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्योदेव एको नारायण" इति ।

कठवल्लीषु तृतीयवल्ल्यां

ऋतं पिबन्तौ सुकृतस्य लोके गुहाम्प्रविष्टौ परमे परार्ध्ये ।

छायातपौ ब्रह्म विदोवदन्ती" त्यादिना द्वयोरात्मनो हृदयगुहावस्थिति मभिधाय

"विज्ञानसारथिर्यस्तुमनः प्रग्रहवान् नरः ।

सोध्वनःपारमाप्नोति तद्विष्णोः परमंपदमिति ” तदुत्तरमन्त्रेण हृदयगुहावस्थितयोस्तयोरेक उपासकः प्राप्ताजीवः; अपरस्तूपास्यः प्राप्यो विष्णुरिति स्पष्टीकृतं । भगवद्गीतासुच

“ सर्वस्य चाहं हृदि सान्निविष्टो मत्तस्स्मृतिर्ज्ञानमपोहनं चेति,” पाद्मे पुराणे नामनिर्वचनाध्याये ।

पूस्संज्ञे तु शरीरेऽस्मिन् शयनात्पुरुषोहरिः ।
शकारस्य षकारोयं व्यत्ययेन प्रयुज्यते” इति ।

एवमन्यत्रापि द्रष्टव्यम् । तदेवं हृदयपुंडरीकोदरवर्तित्वरूपेण पुरिशयनेन लिंगेनायं पुरुषो नारायण एवेति निश्चीयते । एवं “ सपाप्मनाविनिर्मुक्तः परात्परं पुरुषमीक्षत ” इत्यनेन “ नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्य ” मिति मुंडकोपनिषत्तृतीयमुंडक द्वितीयखंडवाक्यं स्मार्यते । तत्र च मुक्तोपसृप्यः पुरुषो नारायण इति, द्वितीयमुंडक प्रथमखंडस्थेन,

“ दिव्योह्य मूर्तः पुरुषस्सबाह्याभ्यन्तरोह्यजः
अप्राणोह्यमनाः शुभ्रोह्यक्षरात्परतः परः ।
एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च ।
खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ।
अग्निर्मूर्धा चक्षुषी चन्द्र सूर्यौ
दिशः श्रोत्रे वाग्विवृताश्च वेदाः ।
वायुः प्राणो हृदयं विश्वमस्य

पद्भ्यां पृथिवीह्येष सर्वभूतान्तरात्मा ” इति मन्त्रसंदर्भेण ज्ञायते ।

तथाहि “ दिव्योह्यमूर्तः पुरुष ” इत्यत्र श्रुतोयोदिव्यः पुरुषः स एवायं “परात्परं पुरुषमुपैति दिव्य” मित्युक्तो दिव्यः पुरुष इति प्रत्यभिज्ञायत इत्यविवादम् । “ दिव्योह्यमूर्तः पुरुष ” इति श्रुतो दिव्य पुरुषस्तु नारायण एवेति तदनन्तरेण, “ एतस्माज्जायते प्राण ” इति मन्त्रेण ज्ञायते । अस्यैव मन्त्रस्य नारायणोपनिषदि एतस्मादित्यस्य स्थाने नारायणादिति पदघटनेन, “ नारायणात्प्राणोजायते । मनस्सर्वेन्द्रियाणि च । खंवायुर्ज्योतिरापः पृथिवीत्रिश्वस्यधारिणी” । इत्याम्नानेन अत्रत्यैतच्छब्दार्थो नारायण इति स्फुटीकरणात् ।

एवं “अग्निर्मूर्धा चक्षुषी चन्द्रसूर्या” विति तदनन्तर मन्त्रोक्तद्युमूर्धत्वादिविशिष्टरूपविशेषेणापि नारायण एवाय-मिति निश्चीयते, तद्धि रूपं,

“ यस्याग्निरास्यं द्यौर्मूर्धा खं नाभिश्चरणौ क्षितिः
सूर्यश्चक्षुर्दिशः श्रोत्रं तस्मै लोकात्मने नमः ”

इत्यादि स्मृतिषु नारायणस्यैव स्मर्यते । एवं “ अग्निर्मूर्धा ” इति मंत्रचतुर्थपादस्थेन “ एष सर्वभूतान्तरात्मा ” इत्यनेन “ एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायण ” इत्यत्रत्यस्य एष सर्वभूतान्तरात्मा इत्यस्य प्रत्यभिज्ञानादप्ययं पुरुषो नारायण एवेति निर्धार्यते । तदेवं “ दिव्योह्यमूर्तः पुरुष ” इति मन्त्रस्य नारायणपरतया तदेकार्थः परात्परं पुरुषमुपैति दिव्यमिति मन्त्रोपि

नारायणपर एवेति तदैकार्थ्यात्परात्परं पुरिशयं पुरुषमीक्षत इति मन्त्रोक्तः पुरुषो नारायण एवेति निर्णीयते । एव मुत्तर-श्लोकस्थेन "यत्तत्पदं कवयोवेदयन्त" इत्यनेन "तद्विष्णोः परमं पदं सदा पश्यन्ति सूरय" इति सुबालोपानिषद्वाक्यस्य प्रत्यभिज्ञायमानतया सूरिभिस्सदा दृश्यमान वैष्णव परमपद-स्थत्वलिंगेनाप्ययं पुरुषो नारायण एवेति निर्धार्यते । तथा, "यत्तच्छान्तम जरममृत मभय" मिति श्रूयमाणं शान्तत्वादि-कमपि नारायण प्रत्यभिज्ञापकम् । शान्तत्वं ह्यशनायादिरहि-तत्वम् । ईदृशं शान्तत्व मजरत्व ममृतत्वं चापहतपाप्मत्व निबन्धनामिति अपहतपाप्मत्वस्मारकैरेतै रपहतपाप्मा दिव्यो देवो नारायणः स्मार्यते ।

तदेवं हृदयपुंडरीकोदरवर्तित्व परात्परत्व मुक्तोप-सृप्यत्व सूरिदृश्यमान वैष्णव परमपदस्थत्वाऽपहतपाप्मत्व तत्कृत सत्यसंकल्पत्वादिभि रास्मिन् विषयवाक्ये व्यप-दिश्यमानैर्लिंगै नारायणस्य प्रत्यभिज्ञायमानतया सौत्रं स इति पदं तस्यैव परामर्शकम् । ततश्च परात्परं पुरिशयं पुरुषमीक्षत इतीक्षणकर्मतया श्रुतः पुरुषस्सः=पुरुषसूक्त नारायणानुवाकादि प्रसिद्धो नारायणः । नारायणानुवाका-दिषु तद्धर्मतया श्रुतानां पुरिशयनादीनामत्र व्यपदेशात् । अत्र व्यपदिश्यमानैरुक्तधर्मै नारायण एवायमिति प्रत्यभि-ज्ञायमानत्वादिति सूत्राऽर्थः । इत्थं चास्यैव स इत्यस्य त्रिपा-द्यधिकरणेषु साध्य समर्पकतया त्रिपाद्यापि कारणवाक्यानां नारायण एव पर्यवसानं प्रादर्शीति सिद्धम् ।

विशेषतोऽपि तत्तदधिकरणेषु तत्तत्कारणवाक्यानां तस्मिन्नेव पर्यवसानं विवक्षितामिति तत्तत्सूत्रोक्त हेतुविशेषैरव-गम्यते । तथाहि, सर्वत्र प्रसिध्यधिकरणे सूत्रं "सर्वत्र प्रसिद्धोपदेशा"दिति । "सर्वं खल्विदं ब्रह्म, तज्जलानिति शान्त उपासीत, सक्रतुं कुर्वीत, मनोमयः प्राणशरीरोभारूपस्सत्य संकल्प आकाशात्मा सर्वकर्मा सर्वगन्धस्सर्वरसस्सर्वमिदमभ्या-त्तोऽवाक्यनादर इतीति" छान्दोग्य तृतीयप्रपाठक चतुर्थखंड-वाक्यमस्य विषयः । अत्र सर्वमिदं ब्रह्मेति सामानाधिकरण्येन सर्वात्मत्वेन प्रतिपाद्यमानं ब्रह्म किं जीवः? । उतपरमात्मा नारायण इति संशये, सिद्धान्त उच्यते—" सर्वत्र प्रसिद्धो-पदेशादिति" । अत्र सर्वत्रेति पक्षानिर्देशः । स इति साध्य-वाचकमीक्षति कर्मव्यपदेशात्स इति सूत्रादाकृष्यते ।

तथा चायमर्थः—सर्वं खल्विदं ब्रह्मेत्यत्र सर्वशब्द निर्दिष्टे जगति तदात्मतया प्रतिपाद्यमानं ब्रह्म सः=नाराय-णानुवाकादिप्रसिद्धो नारायणः । प्रसिद्धोपदेशात्=प्रसिद्ध-तया उपदेशादिति ।

अयंभावः—सर्वं खल्विदं ब्रह्मेत्यत्र सर्वमिदं ब्रह्मेति सामानाधिकरण्येन ब्रह्मशब्द निर्दिष्टस्य सार्वात्म्यव्यपदेशात् खलुना तस्य प्रसिद्धत्वद्योतनाच्च यस्य सार्वात्म्यमुपनिषत्सु प्रसिद्धम्, स एवात्र ब्रह्मशब्दनिर्दिष्ट इति प्रतीयते । उप-निषत्सु च सर्वत्र नारायणस्यैव सार्वात्म्यं प्रसिद्धम् । यथा नारायणानुवाके " विश्वमेवेदं पुरुष " इति । अत्रायं पुरुषो नारायण एव । पूर्वापरवाक्येषु तस्यैव प्रकृतत्वात् । एवं

नारायणोपनिषदि "नारायण एवेदं सर्वं यद्भूतं यच्च भव्य-मिति"। तथा सुबालोपनिषदि "चक्षुश्च द्रष्टव्यं च नारायण" इत्युपक्रम्य, "सर्वं नारायणः। पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यमिति"। महोपनिषदि "सहस्रशीर्षं देवं सहस्राक्षं विश्वशंभुवं। विश्वतः परमं नित्यं विश्वं नारायणं हरिम्। विश्वमेवेदं पुरुषस्तद्विश्वमुपजीवती" त्यादि।

अपिच—सर्वं खल्विदं ब्रह्मेति ब्रह्मणस्सार्वात्म्य मभिधाय, तत्र हेतुरुक्त स्तज्जलानितीति। ततश्च—तज्जत्वात्त-स्मिन् लीयमानत्वात्तदधीनस्थितिकत्वाच्च हेतोस्सर्वमिदं ब्रह्मा-त्मकं खल्वितिवाक्यार्थस्संपद्यते। अनया च हेतूक्त्या सर्वमिदं ब्रह्मेति सामानाधिकरण्य मुपादानोपादेय भावनिबन्धनं शरीरात्मभावनिबन्धनं चेति विज्ञायते। तदधीनस्थितिकत्वस्य तच्छरीरत्वे पर्यवसानात्।

जगदुपादानत्वं च नारायणस्यैव श्रुतं। "एको हवै नारायण आसीन्नब्रह्मानेशान" इत्यादिना। जगच्छरीरकत्व मपि तस्यैव श्रुतं। "यस्य पृथिवीशरीरं। यः पृथिवीमन्तरे संच-रन्यं पृथिवी न वेद" त्यारभ्य "एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्योदेव एको नारायण" इति। तथा च जगदुपादानत्व जगच्छरीरकत्वयो र्नारायण एव प्रसिद्धत्वात्तदुभयनिबन्धन-स्यैव च सार्वात्म्यस्यात्र अनूद्यमानत्वात् सर्वात्मत्वेनेहोप-दिश्यमानं ब्रह्म नारायण एवेति।

तथा तत्रैव द्वितीयं सूत्रं—"विवक्षितगुणोपपत्ते-श्चेति"। विवक्षितानां=तात्पर्यविषयीभूतानां, गुणानां=

मनोमयत्वादीनां, तत्रैवोपपत्तेश्च नारायण एव सर्वं खल्विदं ब्रह्मेत्यत्र ब्रह्मशब्दार्थ इति सूत्रार्थः ।

अयंभावः—सर्वं खल्विदं ब्रह्म, तज्जलानिति शान्त उपासीतेति ब्रह्मोपासनं विधाय, उपास्य गुणविधानाय सक्रतुं कुर्वीतेत्युपासन मनूद्य, मनोमयः प्राणशरीरोभारूप इत्यादिना उपास्यगुणाविहिताः ।

तत्र विशुद्धमनोग्राह्यत्वार्थकेन मनोमय इत्यनेन भास्वररूपार्थकेन भारूप इत्यनेन च "य एषोऽन्तर्हृदय आकाशः तस्मिन्नयं पुरुषो मनोमयः । अमृतोहिरण्मय" इति श्रुतिः, "न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति-कश्चनैनम् । हृदा मनीषा मनसाभिकॢप्तोय एनं विदुर-मृतास्ते भवन्तीति" श्रुतिश्च प्रत्यभिज्ञायते ।

तत्र प्रथमश्रुति र्हिरण्मय पुरुषविषयत्वादन्तरादित्य विद्यावेद्यपुण्डरीकाक्षविषयिणी । द्वितीयाप्युत्तरनारायणैकार्थो लक्ष्मीपतिविषयिणी । न संदृशेतिष्ठतीति मन्त्रस्य हि तदनन्तरपठितेन "अद्भ्यस्संभूतो हिरण्यगर्भ इत्यष्टा" वित्यनेन उत्तरनारायणेन सममेक प्रकरणत्वं श्रुत्यैव ज्ञापितम् । न सन्दृशेतिष्ठतीति मन्त्रपठनानन्तरं अद्भ्यस्संभूत इत्यनुवाकः हिरण्यगर्भ इत्याद्यष्टर्चं च पठनीयमिति हि तदर्थः ।

ततश्च न सन्दृशेतिष्ठतीत्यस्य अद्भ्यः सम्भूत इत्यनु-वाकस्य चैकार्थत्वं प्रकरणपाठेन सिद्धम् । तदेवमुक्तरीत्या प्रत्य-भिज्ञापिताभ्यामुक्त श्रुतिभ्यामस्य वाक्यस्य नारायणविषयत्वं

निर्णीयते। एवं तत्र पाठितेन सत्यसंकल्प इत्यनेन तत्सहचरिता अपहतपाप्मत्वादयोगुणाः स्मार्यन्ते । "अपहतपाप्पा विजरो-विमृत्युर्विशोकोविजिघत्सोऽपिपासस्सत्यकामस्सत्यसंकल्प इत्य-पहतपाप्मत्वादय स्सत्यसंकल्पत्वान्ताहि गुणास्सहपाठिताः। न केवलं सह पठितत्व मात्रेण तदुपस्थितिः।सत्यसंकल्पत्वस्या-ऽकर्मवश्यत्वलक्षणाऽपहतपाप्मत्वं विनाऽनुपपद्यमानत्वादपि तदुपस्थाप्यते । तच्चाऽपहतपाप्मत्वं नारायणा साधारणमिति तेनाऽप्यस्य नारायण विषयत्वं निश्चीयते। एवं एष म आत्मा-न्तर्हृदय इत्यनन्तराम्नातेन हृदयपुंडरीकान्तरवस्थानेनापि मनोमयत्वादि गुणकोयं नारायण इति निश्चीयत इति।

तदित्थं—सर्वत्रप्रसिध्यधिकरणेन सर्वं खल्विदं ब्रह्मे-त्यादिनाम्नातस्य कारणवाक्यस्य नारायणे पर्यवसानं प्रदर्शितामिति सिद्धं। अत्त्रधिकरणे प्रकरणादिति सूत्रेण कठवल्ल्याः कृत्स्नाया भगवत्परत्वं व्यवास्थापि। तस्य हि,

"यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः
मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः"

इति कठोपनिषद्वितीयवल्लीचरममन्त्रोविषयः। तत्र यस्येति यत्संबन्धितया श्रुताभ्यामोदनोपसेचनाभ्यां यच्छब्दार्थः कश्चिदत्ता प्रतीयते। स किं जीवः?। उतपरमात्मा? इति संशये-ऽनेन सूत्रेण परमात्मा विष्णुरेव स इति सिद्धान्त्यते। पूर्व-मन्त्रेषु परमात्मनः प्रकृतत्वा दुत्तरमन्त्रेषु तस्याऽनुवृत्तेश्चा-स्मिन् मन्त्रे यच्छब्द निर्दिष्टो विष्णुरेवेति सूत्रार्थः।

अयंभावः—पूर्वत्र,

"तंदुर्दर्शंगूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम्।
अध्यात्मयोगाधिगमेन देवं मत्वाधीरोहर्षशोकौ जहाति"। इति।

"अशरीरं शरीरेष्वनवस्थेष्ववास्थितम्।
महान्तं विभुमात्मानं मत्वा धीरोन शोचतीति,"

"नायमात्मा प्रवचनेन लभ्योन मेधया न बहुनाश्रुतेन।
यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वा" मिति च परमात्मा प्रस्तुतः। उत्तरत्र च

"ऋतंपिबन्तौ सुकृतस्य लोके गुहाम्प्रविष्टौ परमे परार्ध्ये।
छायातपौ ब्रह्मविदोवदन्ति पंचाग्नयोये च त्रिणाचिकेताः"।

इति परमात्मानुक्रान्तः। अनन्तरमपि

विज्ञानसारथिर्यस्तु मनः प्रग्रहवान्नरः।
सोऽध्वनः पारमाप्नोति तद्विष्णोः परमम्पदम्" ॥

इति वशीकृत शरीरेन्द्रियस्योपासकस्य प्राप्यत्वेन परमात्मा-भिहितः। स च परमात्मा विष्णुरिति च स्पष्टीकृतं। अतस्त-न्मध्यपतितोयं मन्त्रोऽपि नारायणपर एवेति।

अन्तराधिकरणे "स्थानादिव्यपदेशाच्चेति" सूत्रेण छान्दोग्यस्थोपकोसलविद्याया नारायणविषयत्वं निरधारि। स्थानं=स्थितिः। आदिपदेनामृतत्वं गृह्यते; चक्षुषीति च विषयवाक्य पर्यालोचनयाऽध्याहार्यम्। ततश्च चक्षुषि स्थित्य-मृतत्वादीन्यन्तर्यामिब्राह्मणे परमात्मनो नारायणस्यैव

व्यपदिश्यन्ते । अतोऽयमक्ष्यन्तरस्थोऽमृतः पुरुषो नारायण एवेति सूत्रार्थः

अयमाशयः - "य एषोक्षिणि पुरुषो दृश्यते एष आत्मेति होवाच । एतदमृत मेतदभय मेतद्ब्रह्मेति" इत्यत्र य एषोक्षिणि पुरुष इत्यनेन एतदमृतमित्यनेन च "यश्चक्षुषितिष्ठं श्चक्षुषोऽन्तरोयं चक्षुर्नवेद यस्य चक्षुः शरीरं यश्चक्षुरंतरोयम-यत्येषत आत्मान्तर्याम्यमृत" इत्यन्तर्यामि ब्राह्मणस्थं यश्चक्षु-षितिष्ठन्नित्येतदमृत इत्येतच्च प्रत्यभिज्ञायते । तच्च सुबालोप-निषदैकार्थ्या न्नारायणविषयम् । अतस्तदैकार्थ्यादिदमपि वाक्यं नारायणाख्य परमात्मविषयमेवेति । "सुखविशि-ष्टाभिधानादेव चेति' तदधिकरण सूत्रान्तरेणाप्यस्य वाक्यस्य नारायणपरत्वं न्यरूपि । "कं ब्रह्म खं ब्रह्मेति" पूर्ववाक्ये सुखविशिष्टस्य ब्रह्मणोऽभिधानाद्य एषोक्षिणि पुरुषो दृश्यत इत्यत्राऽक्ष्यन्तरस्थत्वेनोक्तः पुरुषो नारायण एवेति तदर्थः

अयंभावः—कं ब्रह्म खं ब्रह्मेति पूर्ववाक्ये प्रस्तुतं यद्ब्रह्म तदेवात्र य एषोऽक्षिणि पुरुषो दृश्यत इत्यत्र यच्छब्देन परामृश्यत इति ब्रह्मशब्देन प्रत्यभिज्ञाना दवगम्यते । पूर्ववाक्ये च कं ख मित्यनयोरन्योन्य विशेषणतयाऽपरिच्छिन्न सुखविशिष्टं ब्रह्मेति तदर्थः । इदं च "यद्वाव कं तदेव खं यदेव खं तदेव कमिति । प्राणं च हास्मै तदाकाशं चोचुरिति" तदनन्तरवाक्येनैव स्पष्टीकृतम् । अत्राऽकाशवाचिना ख शब्देनाकाशशब्देन चा परिच्छिन्नत्वं लक्षणयोपस्थाप्य तेन सुखस्य विशेषणादानन्द विशेषणतया लक्षणयाऽपरिच्छिन्नत्व मुपस्थापयताऽकाशशब्देन

घटितं "यदेष आकाश आनन्दोनस्या" दित्यानन्दमय विद्यावाक्यं प्रत्यभिज्ञायते। तच्चाऽदित्यमंडलान्तर्वर्ति पुंडरीकाक्षविषयमिति तदैकार्थ्यादस्मिन्नपि वाक्ये स एव पुंडरीकाक्षो नारायणः कं ब्रह्म खं ब्रह्मेत्याभिधीयत इति निश्चीयते। ततश्च तस्यैवात्र य एषोक्षिणि पुरुष इति परामृश्यमाणतया स नारायण एवायं अक्ष्यन्तरः पुरुष इति।

अन्तर्याम्यधिकरणे अन्तर्याम्यधिदैवाऽधिलोकादिषु तद्धर्म व्यपदेशादित्यनेनाऽन्तर्यामि ब्राह्मणस्य नारायणविषयत्वं समर्थितं। अत्र तद्धर्म व्यपदेशादित्यत्र तच्छब्देन सुबालोपनिषत्प्रसिद्धो नारायणः परामृश्यते। तस्य धर्माः= सर्वचेतनाचेतन शरीरकत्व स्वाभाविकामृतत्वादय स्तेषामत्र व्यपदेशादन्तर्यामि ब्राह्मणे सर्वान्तर्यामित्वेन श्रुतोन्तर्यामी स नारायण एवेति सूत्रार्थः।

अयंभावः—सुबालोपनिषदि "यस्य पृथिवीशरीरम्। यः पृथिवीमन्तरे संचरन्यं पृथिवीन वेदे" त्यादिना श्रुतानां पृथिव्यादि शरीरकत्व पृथिव्याद्यन्तरवस्थितत्व तत्तदवेद्यत्वादीनां तथैवात्राप्यभिधीयमानत्वेन तदैकार्थ्यमन्तर्यामिब्राह्मणस्यावगम्यते। अतस्सुबालोपनिषदि पृथिव्यादि शरीरकत्वेनाभिहितो नारायण एवायमन्तर्यामि ब्राह्मणे सर्वान्तर्यामित्वेनाऽभिधीयमान इति निश्चीयत इति।

अदृश्यत्वादि गुणकाधिकरणे "अदृश्यत्वादि गुणको धर्मोक्ते" रिति सूत्रेण, मुंडकोपनिषदि "अथ परा यया तदक्षर मधिगम्यते। यत्तदद्रेश्यम ग्राह्यमगोत्रमवर्णमचक्षुः

श्रोत्रं तद पाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्तिधीराः" इत्यादिनाऽम्नातस्य कारण-वाक्यस्य नारायणविषयत्वं प्रदर्शितं। सुबालोपनिषद्याम्नातानां नारायणधर्माणामत्रोच्यमानत्वादय मदृश्यत्वादिगुणको नारा-यण एवेति सूत्रार्थः

अयंभावः—सुबालोपनिषदि तृतीयखंडे "असद्वा इदमग्र असीदजातमभूतमप्रतिष्ठित" मित्युपक्रम्य, "अप्राण-ममुखमश्रोत्रमवागमनोऽतेजस्कम चक्षुष्कम नामगोत्रमशिर-स्कम पाणिपाद" मित्यादिनाऽम्नातानामगोत्रत्वाऽचक्षुःश्रोत्रत्वा-ऽपाणिपादत्वाऽव्ययत्वादीनामत्राप्याम्नानेन सुबालोपनिषत्प्रति-पन्न एवाऽयमक्षर शब्दनिर्दिष्ट इति प्रत्यभिज्ञायते। एवमुत्तरत्र "येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्वतो ब्रह्मविद्या" मित्यक्षरशब्देन पूर्वप्रकृत मदृश्यत्वाऽदिगुणकमक्षरं प्रत्यभि-ज्ञाप्य, तस्य पुरुषत्व मभिधाय

" दिव्योह्यमूर्तः पुरुषस्सबाह्याऽभ्यन्तरोह्यजः।
अप्राणोह्यमनाः शुभ्रोह्यक्षरात्परतःपरः"

इति तदुत्तरमन्त्रे स इति तत्पदेन तमेवाक्षरपुरुषं परामृश्य, तस्य दिव्यत्व मजत्व मित्यादिकं धर्म मुपदिश्य, तेन "अन्तः शरीरे निहितो गुहायामज एको नित्य इति," "दिव्योदेव एको नारायण" इति च सुबालोपनिषदि श्रुत मजत्वं दिव्यत्वं च प्रत्यभिज्ञाप्य, तदनन्तरं

एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च
खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी।

इति । "नारायणात्प्राणोजायते । मनस्सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी" इति नारायणोपनिषन्मन्त्रस्यैव नारायणपदस्थाने प्रक्रान्तपरामर्शकै तच्छब्दघटितस्य पठनेन नारायण एवाऽयमेतच्छब्दपरामृष्टः पूर्वसन्दर्भप्रकृतोऽक्षर दिव्यपुरुष इति निश्चीयते । इति ।

"रूपोपन्यासाच्चे"ति तदधिकरणीय सूत्रान्तरेणापि नारायणविषयत्वमस्य वाक्यस्य प्रदर्शितम् । "अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ" वित्यादिनाऽस्याऽक्षरपुरुषस्य त्रैलोक्य-शरीरकत्वोपन्यासादप्ययमक्षर पुरुषो नारायण इति सूत्रार्थः । यथाचास्य रूपस्य नारायणगमकत्वं तथोपपादितं प्राक् ।

वैश्वानराऽधिकरणे—"स्मर्यमाणमनुमानं स्या"दिति सूत्रेण वैश्वानरविद्याया नारायणविषयत्वं व्यवस्थापितम् । स्मर्यमाणं=तदेवेदमिति प्रत्यभिज्ञायमानं रूपमनुमानं=नारा-यणत्वगमकं स्यादिति सूत्रार्थः

अयंभावः —"अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ" वित्या-दिना श्रुत्यन्तरे द्युप्रभृतिपृथिव्यन्तं नारायणस्य मूर्धादिपादा-न्तावयवत्वेनोपदिष्टं । वैश्वानरविद्याप्रकरणेऽपि "मूर्धैव सुतेजा" इत्यादिना वैश्वानरात्मनो द्युप्रभृतिपृथिव्यन्तं मूर्धा-दिपादान्ताऽवयवत्वेनोपदिश्यते । अतस्तदेवेदं रूपमिति प्रत्यभिज्ञायमानतया, तादृशरूपवत्त्वेन लिङ्गेन वैश्वानरात्मायं नारायण एवेति निश्चीयत इति ।

एवं "शब्दादिभ्योऽन्तः प्रतिष्ठानाच्च नेतिचेन्न तथा दृष्ट्युपदेशादसम्भवात्पुरुषमपि चैनमधीयत" इति सूत्रे

पुरुषमपिचैनमधीयत इति सूत्रखण्डेनाप्यस्या नारायणपरत्वं सिद्धान्तितम्। वाजसनेयिन एनं वैश्वानरात्मानं पुरुषमधीयते चेति सूत्रार्थः। वाजसनेयके वैश्वानरविद्याप्रकरणे— "स एषोऽग्निर्वैश्वानरोयत्पुरुष" इति पुरुषश्रुत्या, "सहस्रशीर्षा पुरुषः" "पुरुष एवेदं सर्वम्" "अथ पुरुषोहवै नारायणोऽकामयत" इत्यादिश्रुतिस्थ पुरुषशब्द प्रत्यभिज्ञापिकया, तत्समानाधिकरणवैश्वानरात्मनो नारायणत्वं निश्चीयत इति तदाशयः।

नच पुरुषश्रुत्या ऽचेतनादग्नेर्व्यावृत्ति प्रदर्शनाय चेतनत्वमेव वैश्वानरस्यानेन सूत्रखंडेन प्रदर्शितमिति प्रतीयते, तावता कथं नारायणत्वसिद्धिरिति वाच्यम्; यदि पुरुषश्रुत्या वैश्वानरस्य चेतनत्वमात्रमत्र सिषाधयिषितं स्यात् तदा अनन्तरसूत्रे "अत एव न देवता भूतंचे"त्यस्मिन्नत एवेति एतच्छब्देन पुरुषश्रुतिं परामृश्य, तया अग्न्यभिमानिदेवताव्यावृत्तिसाधनासंगतेः। देवतायाश्चेतनत्वानपायात्। अतः पुरुषश्रुत्या अग्न्यभिमानिदेवतारूपजीवविशेषाद्व्यावृत्तिमपि साधयता भगवता सूत्रकृता पुरुषसूक्त नारायणानुवाकादि प्रत्यभिज्ञानमेवात्र हेतुतया विवक्षितमित्यंगीकार्यम्। ततश्च नारायणत्वमेवानेन सूत्रखण्डेन साधितमिति सिद्धम्।

वस्तुतस्तु, पुरुषमपि चैनमधीयत इति सूत्रखण्डेन पुरुषश्रुत्या वैश्वानरात्मनो नारायणत्व साधनमेव सूत्रकाराभिमतमिति पुरुषश्रुतिरूपहेतूक्तिबलादवगम्यते। पुरुषशब्दोहि, नारायणवाची।

"पुराणपुरुषोयज्ञः
पुरुषः पुरुषोत्तम"

इति नारायणपर्यायेषु नैघंटुकोक्तेः ।

"पूस्संज्ञेतु शरीरेऽस्मिन्
शयनात्पुरुषो हरिः" इति ॥

"पूर्णत्वात्पुरुषोविष्णु"रिति ।

"स एव वासुदेवोयं
साक्षात्पुरुष उच्यते" इति ।

"भगवानिति शब्दोयं
तथा पुरुष इत्यपि ॥
निरुपाधींच वर्तेते
वासुदेवे सनातने" इति ॥

"सर्वलोकपतिस्साक्षात्
पुरुषः प्रोच्यते हरिः" ॥

"तं विना पुंडरीकाक्षं
कोऽन्यः पुरुषशब्दभाक्" ॥

इति च महर्षिभिरुद्घोषितत्वात् ।

"यथा पुरुष शब्दोयं
वासुदेवेऽवतिष्ठते
तथा शंकरशब्दोऽयं
महादेवेऽवतिष्ठते" ॥

इति स्कान्दवचने शंकरशब्दस्य महादेवैकवाचित्वे पुरुषशब्दस्य वासुदेवैकवाचकतायादृष्टान्तीकरणात् । पुरुषसूक्त

शब्दार्थविवरणाय प्रवृत्ते "पुरुषस्य हरेस्सूक्त"मिति शौनकवचने पुरुषशब्दस्य हरिशब्देन व्याख्यानात् ।

ब्रह्मा कमलगर्भाभो
रुद्रः कालाग्निसन्निभः ।
पुरुषः पुंडरीकाभो
रूपं तत्परमात्मनः ॥

इति त्रिमूर्तीनां विभज्य वर्णकथनावसरे नारायणशब्दस्थाने पुरुषशब्दप्रयोगात्पुरुषशब्द प्रवृत्तिनिमित्तानां हृदयपुंडरीकोदरवर्तित्वादीनां तत्रैव सद्भावाच्च । अतोत्र पुरुषश्रुतिरूपप्रमाणोपन्यासेन नारायणत्वमेव सिषाधयिषितामिति सुस्पष्टमवगम्यते ।

तदेवं द्वितीयपादे षड्भिरधिकरणैरस्पष्टजीवलिंगैर्जीवपरतयाऽपाततः प्रतीयमानानां कारणवाक्यविशेषाणां नारायण एव पर्यवसानं निरधारीति सिद्धं । अत्र सर्वत्र प्रसिद्ध्यधिकरणात्त्रधिकरणाभ्यां भगवत उपासकानुग्रहाय हृदयायतने सन्निहितत्वनिरूपणेन सर्वसमाश्रयणीयत्वोपयुक्तं सौलभ्यं, अन्तराधिकरणेनाऽपरिच्छिन्नानन्दस्वरूपतया प्राप्यत्वोपयुक्तं निरतिशयभोग्यत्वं, अन्तर्याम्यधिकरणेन स्वेतर सर्वनियन्तृतया स्वस्य नियन्त्रन्तराभावेनाश्रितरक्षणोपयोगितया समाश्रयणीयत्वोपयुक्तम प्रतिहतसंकल्पत्वं, अदृश्यत्वादिगुणकाधिकरणेनाश्रितरक्षणोपयुक्ततया समाश्रयणीयत्वोपयुक्तं सर्वज्ञत्वं, वैश्वानराधिकरणेन स्वोपासकानां विश्वेषां सर्वपुरुषार्थप्रापकत्वं चाश्रयणीयत्वोपयुक्तं निरूपितम् ।

तृतीयपादे द्युभ्वाद्यधिकरणे "द्युभ्वाद्यायतनं स्वशब्दादिति" सूत्रेण मुंडकोपनिषदो भगवत्परत्वं व्यवस्थापितं। अत्र "ईक्षतिकर्मव्यपदेशात्स" इति सूत्रात्स इति साध्यवाचकं पदमाकृष्यते। ततश्च स्वशब्दान्नारायणा साधारणशब्दाद्यु पृथिव्याद्याधारतया श्रुतो नारायण इति सूत्रार्थः।

अयंभावः—"यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतं मनस्सहप्राणैश्च सर्वैस्तमेवैकं जानथात्मानमन्यावाचोविमुंचत। अमृतस्यैष सेतु" रित्यत्र एष इति, एतच्छब्देन द्युपृथिव्याधारत्वेन पूर्वप्रस्तुतमात्मानं परामृश्य अमृतस्य सेतुरिति तस्य मोक्षप्रापकत्वमुक्तं। सेतुरिव सेतुः; नद्यादौ सेतुर्हि कूलप्रापकः। तद्वदयं संसारसागरपतितानां तत्पारभूतमोक्षप्रापकः इत्यर्थः। अनेनामृतसेतुत्वेन "तमेवं विद्वानमृत इहभवति, नान्यः पन्था अयनाय विद्यते" इति श्रुतिस्स्मार्यते।

तथा उत्तरत्र—

"यथा नद्यस्यन्दमानास्समुद्रे
अस्तं गच्छन्ति नामरूपे विहाय।
तथा विद्वान्नामरूपाद्विमुक्तः
परात्परं पुरुषमुपैति दिव्यम्"

इत्यत्र दिव्यं पुरुषमित्यनेन "पुरुष एवेदं सर्व" मित्युपक्रम्य, "पादोस्य विश्वाभूतानि, त्रिपादस्यामृतं दिवी" त्युक्तो दिव्यपुरुषस्मार्यते। अतो द्युपृथिव्याद्याधारत्वेन श्रुतोऽयमात्मा परमात्मा नारायण एवेति।

भुमाधिकरणे—"धर्मोपपत्तेश्चेति" सूत्रेण भूमविद्यावेद्यो नारायण इति स्पष्टीकृतम्। भूमसम्बन्धितया श्रुतानाममृतत्व सार्वात्म्यादीनां तस्य नारायणत्व एवोपपत्तेर्भूमशब्दवाच्यो नारायण एवेति सूत्रार्थः।

अयमाशयः—भूमविद्याप्रकरणे भूमानं प्रस्तुत्य, "स एवाधस्तात्स उपरिष्टात्स पश्चात्स पुरस्तात्स दक्षिणतस्स उत्तरतस्स एवेदं सर्व" मिति श्रूयते। अत्र स एवेदं सर्वमिति तच्छब्देन भूमात्मानं परामृश्य, तस्य सार्वात्म्यमुपदिष्टम्। अनेन च सार्वात्म्योपदेशेन "पुरुष एवेदं सर्व" मित्यादेः प्रत्यभिज्ञायमानतया तत्प्रतिपाद्यो नारायण एवायं भूमगुणविशिष्टस्सर्वात्मेति निर्णीयत इति।

इदमुपलक्षणम्—"भूमा वै सुखं, योवै भूमा तत्सुखं; यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति सभूमा" इति भूमात्मनोऽपरिच्छिन्नसुखरूपता प्रतिपादनेन "रसोवै सः, रसंह्येवायं लब्ध्वानन्दीभवति, यदेष आकाश आनन्दोनस्या" दित्यानन्दमयविद्यावाक्य प्रत्यभिज्ञानेन तदैकार्थ्यावगमादप्यस्य नारायणत्वं निश्चीयत इत्यपि सूत्रकाराशयोऽवगन्तव्यः।

अक्षराधिकरणे—"अन्यभावव्यावृत्तेश्च" त्यनेन सूत्रेण "एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति, अस्थूलमनण्वह्रस्व' मित्यादिनाऽम्नाताक्षरविद्यावेद्यो नारायण इति निर्णीतम्। प्रकृताक्षरशब्द निर्दिष्टस्य परमात्मनो नारायणादन्यभावस्याऽन्यत्वस्य व्यावृत्तेर्व्यावर्तनादपि प्रकृताक्षरशब्दवाच्यो नारायण एवेति सूत्रार्थः।

अयंभावः—गार्गीब्राह्मणे, "तद्वा एतदक्षरं गार्गि, अदृष्टं द्रष्टृ, अश्रुतं श्रोतृ, अमतं, मन्तृ, अविज्ञातं विज्ञातृ, नान्यदतोस्ति द्रष्टृ, नान्यदतोस्ति श्रोतृ, नान्यदतोस्ति मन्तृ, नान्यदतोस्ति विज्ञातृ, एतस्मिन्नु खल्वक्षरे गार्गि आकाश ओतश्च प्रोतश्चेति" श्रूयते। अत्र अदृष्टं द्रष्टृ इत्यादिना अदृष्टोद्रष्टेत्यादेर्नान्यदतोऽस्ति द्रष्टृ इत्यादिना नान्योतोऽस्ति द्रष्टेत्य देश्चान्तर्यामिब्राह्मणवाक्यस्य प्रत्यभिज्ञायमानतया तदैकार्थ्याऽवगमादन्तर्यामिब्राह्मणस्य च सुबालोपनिषदैकार्थ्येन नारायणपरतायाः पूर्वमेव व्यवस्थापिततया न्तर्यामिब्राह्मणप्रतिपाद्यो नारायण एव गार्गि ब्राह्मण प्रतिपाद्यमक्षरमिति निर्णीयत इति।

इदमुपलक्षणम् -- सुबालोपनिषदि तृतीयखण्डे, "अप्राणममुखमश्रोत्रमवागमनोऽतेजस्कम चक्षुष्कम नामगोत्रम शिरस्कम पाणिपादम स्निग्धम लोहितम प्रमेयम ह्रस्वम दीर्घम स्थूलम नण्वनल्पम पारम निर्देश्यम नपावृत्तम प्रकाश्यम संवृतमनन्तरमबाह्यं न तदश्नाति किंचन न तदश्नाति कश्चनेति" श्रुतानामप्राणत्वादीनां गार्गिब्राह्मणेऽपि "अस्थूलम नण्वह्रस्वम दीर्घम लोहितम स्नेहम च्छायम तमोऽवाय्वनाकाशम संगम रसम गन्धम चक्षुष्कम श्रोत्रम वागमनोऽतेजस्कम प्राणम मुखम मात्रमनन्तरमबाह्यं न तदश्नाति किंचन न तदश्नाति कश्चने"त्यत्र ईषत्पौर्वापर्येण तथैव श्रवणात्सुबालोपनिषद्यस्थूलत्वादि गुणविशिष्टतयाऽम्नातो नारायण एवाऽस्थूलत्वादि गुणविशिष्टतयाऽम्नायमानमिदमक्षरमिति

प्रत्यभिज्ञायते । अतोऽपि गार्गिब्राह्मणोक्तमक्षरं नारायण एवेति निश्चीयत इत्यपि द्रष्टव्यम् । ईक्षतिकर्माधिकरणस्य प्रश्नोपनिषदो नारायणपरत्वव्यवस्थापनपरत्वं प्रागेव प्रपंचितम् ।

दहराधिकरणे -" दहर उत्तरेभ्यः " " गतिशब्दाभ्यां तथाहि दृष्टं लिंगं चेति " सूत्राभ्यां छान्दोग्याष्टमप्रपाठके आम्नातायादहरविद्याया नारायणे पर्यवसानं प्रादर्शि । उत्तरेभ्यः=उत्तरवाक्य श्रुतेभ्यो गुणेभ्यो हेतुभ्यः । " अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुंडरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्य " मित्यत्र श्रुतदहराकाशशब्दवाच्यो नारायण इति प्रथमसूत्रार्थः ।

अयंभावः – छान्दोग्याष्टम प्रपाठके दहरविद्याप्रकरणे " दहरोऽस्मिन्नन्तर आकाश " इति दहराकाशं प्रस्तुत्य, " एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासस्सत्यकामस्सत्यसंकल्प " इति तदुत्तरवाक्ये एष इति एतच्छब्देन तमेव दहराकाशं परामृश्य, तस्यात्मत्वाऽपहतपाप्मत्वादयोगुणाः प्रतिपादिताः । अत्र एष आत्मेत्यात्म शब्दस्संकोचकाभावात्सर्वान्तरात्मत्वमाह । ततश्च, सर्वान्तरात्मत्ववाच्यात्मशब्दापहतपाप्मशब्दसमभिव्याहारेण, " एष सर्वभूतान्तरात्माऽपहतपाप्मे " ति सुबालोपनिषद्वाक्य प्रत्यभिज्ञानादुक्त सुबालोपनिषद्वाक्येन नारायणासाधारणतयाऽवगतात्सर्वभूतान्तरात्मत्वाऽपहतपाप्मत्वादिलिंगाच्चायं दहराकाशस्सुबालोपनिषत्प्रतिपन्नो नारायण एवेति निर्णीयते ।

एवं — "य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामांस्तेषां सर्वेषु लोकेषु कामचारोभवती" त्युपक्रम्य, यंयं कामं कामयते सोस्य संकल्पादेव समुत्तिष्ठति तेन संपन्नोमहीयत" इत्यन्तेन प्रकृतदहराकाशवेदनस्य सत्यसंकल्पत्वादिगुणाष्टकाविर्भावलक्षणामृतत्वप्राप्तिसाधनत्वं प्रतिपादयता "तमेवं विद्वानमृतइहभवती"ति पुंसूक्तवाक्यप्रत्यभिज्ञानाच्चेनाऽपि प्रकृतदहराकाशोनारायण इति निर्णीयते ।

तद्यथा हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि संचरन्तो न विन्दन्ति एव मेवेमास्सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति अनृतेन हि प्रत्यूढा" इति प्रकृतदहराकाशविषये उत्तरवाक्ये प्रतिपाद्यमानयाऽन्तरात्मतयाऽवस्थितस्य प्रकृतदहराकाशस्योपरि तन्नियमितानां तमजानतीनां सर्वासां प्रजानाम् अहरहर्गत्या तद्वाक्यस्थेन प्रकृतदहराकाशविषयेण ब्रह्मलोकशब्देन चायं दहराकाशो नारायण इति निश्चीयते। तथाह्यन्यत्र अन्तर्यामिब्राह्मणे अन्तर्यामितयाऽवस्थितस्य नारायणस्योपरि तन्नियामितानां तमजानतीनां प्रजानामहरहर्गमनं दृष्टम् । माभूदन्यत्र दर्शनम् । स्वयमेव त्वियं हिरण्यनिधि दृष्टान्तावगत परमपुरुषार्थभावस्यास्य दहराकाशस्योपरि तदाधारतयाऽहरहस्सर्वासां प्रजानां तमजानतीनां गतिरस्य नारायणत्वे पर्याप्तं लिंगमिति द्वितीयसूत्रार्थः ।

अयं भावः—तद्यथा हिरण्यनिधिं निहितमित्याद्युदाहृत दहरविद्याप्रकरणस्थवाक्येन यथा कुत्रचित्क्षेत्रे निहितं हिरण्यनिधिं तत्क्षेत्रस्वभावानभिज्ञास्तदुपरि सर्वदा संचरन्तोऽपि न

लभन्ते ; तथा, अन्तर्यामितया स्थितमेतं दहराकाशं तदुपरि सर्वदा वर्तमाना अपि न लभन्ते न जानन्तीत्यर्थकेन, "यस्सर्वेषु भूतेषु तिष्ठन् सर्वेभ्यो भूतेभ्योऽन्तरोयं सर्वाणि भूतानि न विदुर्यस्य सर्वाणि भूतानि शरीरं यस्सर्वाणि भूतान्यन्तरोयमयति एषत आत्मान्तर्याम्यमृत" इत्यन्तर्यामि ब्राह्मणवाक्यार्थ प्रत्यभिज्ञानात्तस्यच सुबालोपनिषदैकार्थ्येन नारायण विषयत्वात्तत्प्रतिपाद्यो नारायण एवाय मुदाहृतवाक्य प्रतिपाद्यो दहराकाश इति निश्चीयत इति ।

इदमुपलक्षणं, "अथ यादिदमस्मिन् ब्रह्मपुरे दहरं पुंडरीकं वेश्म दहरोस्मिन्नन्तर आकाश" इत्यादिना उदाहृतदहरविद्यावाक्येन

"दह्रं विपाप्मं परवेश्मभूतं
यत्पुंडरीकं पुरमध्यसंस्थं ।
तत्रापि दह्रं गगनं विशोक
स्तास्मिन् यदन्तस्तदुपामितव्यम् ॥"

इति तैत्तिरीयवाक्यप्रत्यभिज्ञानात्तस्यच तदुत्तरेण नारायणानुवाकेन "पद्मकोशप्रतीकाश" मित्यादिवाक्यावगततदैकार्थ्येन नारायणपरत्वावगमात्तैत्तिरीयदहरविद्यावेद्यो नारायण एवायं दहराकाश इति निर्णीयत इत्यपि बोध्यम् ।

प्रमिताधिकरणे—"शब्दादेव प्रमितः" "कंपनादिति" सूत्राभ्यां कठवल्लीस्थस्य

"अंगुष्ठमात्रः पुरुषो
मध्य आत्मनि तिष्ठति ।
ईशानो भूतभव्यस्य
न ततो विजुगुप्सते ॥"

इत्यादिसन्दर्भस्य नारायणपरत्वं प्रदर्शितम् । ईशानोभूतभव्यस्येति शब्दादेव अंगुष्ठप्रमितत्वेन श्रुतः पुरुषो नारायण इति प्रथमसूत्रार्थः ।

अयं भावः—अंगुष्ठमात्र इत्याद्युदाहृतमन्त्रे ईशानोभूतभव्यस्येति श्रूयते । तेन पतिं विश्वस्येति नारायणानुवाकवाक्यप्रत्यभिज्ञानात्तत्प्रतिपाद्यो नारायण एवायमंगुष्ठप्रमितमन्त्रप्रतिपाद्यः पुरुष इति निर्णीयत इति ।

"यदिदं किंच जगत्सर्वं
प्राण एजति निस्सृतं ।
महद्भयं वज्रमुद्यतं
य एनं विदुरमृतास्ते भवन्ति ॥

भयादस्याऽग्निस्तपति
भयात्तपति सूर्यः ।
भयादिन्द्रश्च वायुश्च
मृत्युर्धावति पंचमः" ॥

इति प्रकृतांगुष्ठप्रमितविषयमन्त्रेऽभिहितात् प्रकृतांगुष्ठप्रमितपुरुषाद्भयेन समस्तप्राणिनां कंपनाल्लिंगादयमंगुष्ठप्रमितः पुरुषो नारायण एवेति द्वितीयसूत्रार्थः ।

अयमाशयः—उदाहृतमन्त्रयोर्द्वितीयेन "भीषास्माद्वातः पवते । भीषोदेति सूर्यः । भीषास्मादग्निश्चेन्द्रश्च । मृत्युर्धावति पंचम इतीति" तैत्तिरीयानन्दवल्लीवाक्य प्रत्यभिज्ञानात्तस्य चादित्यमंडलान्तर्वर्ति पुंडरीकाक्ष महापुरुषविषयत्वात्तदैकार्थ्येनायं मन्त्रो नारायणपर इति निश्चीयत इति ।

इदमुपलक्षणम्—य एत द्विदुरमृतास्ते भवन्तीत्यनेन तमेवं विद्वानमृतइह भवतीति पुरुषसूक्तवाक्यप्रत्यभिज्ञानादपि नारायणपर एवायं मन्त्र इति निर्णीयत इत्यपि बोध्यम् ।

अर्थान्तरत्वादिव्यपदेशाधिकरणे—"आकाशोर्थान्तरत्वादिव्यपदेशा"दिति सूत्रेण, "आकाशोहवै नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृतं स आत्मा"। इति छान्दोग्यश्रुतेर्नारायणपरत्वं प्रदर्शितं । नामरूपव्याकर्तृत्वार्थकेन नामरूपयोर्निर्वहिता इत्यनेन

"सर्वाणि रूपाणि विचित्य धीरो

नामानि कृत्वाऽभिवदन्यदास्ते" इति पुरुषसूक्तवाक्य प्रत्यभिज्ञानात्तदमृतं सआत्मा इत्यनेन तमात्मानमुपासीताऽजरममृतमिति सुबालोपनिषत्प्रत्यभिज्ञानाच्च तत्प्रतिपाद्यो नारायण एवायमाकाश इति निर्णीयत इति सूत्रार्थः । तदेवं तृतीयपादे द्युभ्वाद्यधिकरण प्रभृतिभिस्सप्तभिरधिकरणैस्स्पष्ट जीवलिंगैर्जीवपरतयाऽपाततः प्रतीयमानानां कारणवाक्यानां नारायणे पर्यवसानं निरधारीति सिद्धम् ।

अत्र द्युभ्वाद्यधिकरणे—"स एषोन्तश्चरते बहुधा जायमान" इति वाक्यार्थ निरूपणेन सुरनरातिर्यगादिष्वव-

तारमुखेन स्वत एव चेतनोज्जीवनाय प्रवृत्ततया भगवतस्समाश्रयणीयत्वोपयुक्तं सूपसदत्वम्, भूमाधिकरणे—" एष तु वा अतिवदतीति " वाक्यार्थ निरूपणेन भगवतः परम प्राप्यत्वोपयुक्तं स्वेतरसकल पुरुषार्थातिशयितत्वं, अक्षराधिकरणे—" योवा एतदक्षरं गार्ग्यविदित्वास्मिन् लोके जुहोति यजते तपस्तप्यते वहूनि वर्षसहस्राण्यन्तवदेवास्य तद्भवतीति" वाक्यार्थ निरूपणेन भगवदुपासनातिरिक्तस्य मुक्त्यनुपायत्वाविष्करणाद्भगवदुपासन प्रवृत्त्यौपयिकं मुक्तेरनन्यलभ्यत्वं, ईक्षतिकर्माधिकरणे—" परात्परं पुरिशयं पुरुषमीक्षत " इति वाक्यार्थ निरूपणेन रक्ष्येण जीवेन सह तदीयशरीरेऽवस्थानाविष्करणाद्भगवतस्समाश्रयणीयत्वौपयिकं रक्षावसरप्रतीक्षत्वं, दहराधिकरणे—"तद्यथा हिरण्यनिधिं निहितमित्यादिवाक्यार्थनिरूपणेन भगवतः परमपुरुषार्थतया प्राप्यत्वौपयिकं कल्याणगुणैर्निरतिशयभोग्यत्वं, प्रमिताधिकरणे—"ईशानो भूतभव्यस्य न ततो विजुगुप्सते" इति वाक्यार्थ निरूपणेन जुगुप्सनीयेपि कलेबरे जुगुप्सा मन्तराऽवस्थानकथनेन जीवेषु भगवतो निरतिशयं वात्सल्यं चाश्रणीयत्वोपयुक्तं निरूपितम् ।

आनुमानिकाधिकरणे " आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्त गृहीते र्दर्शयति चेति" सूत्रेण कठवल्ल्या भगवत्परत्वं व्यवस्थापितं ॥ एकेषां शाखिनां

इन्द्रियेभ्यः पराह्यर्था अर्थेभ्यश्च परं मनः ।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः ॥

महतः परमव्यक्तमव्यक्तात्पुरुषः परः ।

पुरुषान्न परं किंचित्सा काष्ठा सा परा गति"रितिश्रुतौ आनुमानिकं प्रधानमपि कारणत्वेनाम्नायत इति चेत्तन्न; उक्तश्रुतावव्यक्तशब्देन शरीराख्यस्य वशीकार्यत्वज्ञापनाय रथ-रूपकविन्यस्तस्य रथत्वेन रूपितस्य गृहीतेर्ग्रहणात्; दर्शयति च तदेव वशीकार्यत्वमनन्तरो मन्त्रः

"यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि ।

ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छान्त आत्मनीति" इति सूत्रार्थः ॥

अयं भावः —अस्मिन् प्रकरणे

आत्मानं रथिनं विद्धि शरीरं रथमेवच ।

बुद्धिन्तु सारथिं विद्धि मनःप्रग्रहमेवचेत्यादिना आत्म-शरीरादीनां रथिरथादिभावेन रूपणेन तेषां संसाराध्वपारगम-नोपायभूतोपासनोपकरणतां प्रदर्श्य, "यस्त्वविज्ञानवान्भवती" त्यादिना उपासननिष्पत्तये तेषां वशीकार्यताया आवश्यकतां च प्रदर्श्य, वशीकार्यतायां यत्प्रधानं तत्र प्रयत्नातिशयासिद्ध्ये वशीकार्यतायां प्रधानाऽप्रधानाविवेचनमनेन मन्त्रेण क्रियते "इन्द्रियेभ्यः पराह्यर्था" इत्यादिना ।

तत्र इन्द्रियेभ्यो हयत्वेन रूपितेभ्यो गोचरत्वेन रूपिताः शब्दादयो विषयाः वशीकार्यतायां प्रधानभूताः । तेभ्योऽपि प्रग्रहत्वेन रूपितं मनः प्रधानम् । तस्मादपि सारथित्वेन रूपिता बुद्धिरध्यवसायरूपा प्रधानभूता । तस्या अपि कर्ता आत्मा रथित्वेन रूपितः प्रधानभूतः । तस्मा-

दपि, रथत्वेन रूपितमव्यक्तपरिणामभूतं शरीरं प्रधानभूतं। तस्मादपि सर्वान्तर्यामी सर्वप्रेरकः "सोध्वनः पारमाप्नोति तद्विष्णोः परमं पद"मिति प्रागुक्तस्संसाराध्वपारभूतः पुरुषोत्तमः प्रधानभूत इति। तदिदमिन्द्रियादिपुरुषोत्तमपर्यन्तानां वशीकार्यतायामुत्तरोत्तरप्राधान्यमनन्तरेण "यच्छेद्वाङ्मनसी प्राज्ञ" इत्यादिमन्त्रेणैव प्रदर्श्यते।

अस्य हि मन्त्रस्यायमर्थः—प्राज्ञः=उपासनोपकरण वशीकरण कुशलः। वाक्=वाक्पूर्वकाणि ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि च मनसि यच्छेन्नियच्छेत् मनोऽननुगुण प्रवृत्तिविमुखानि कुर्यादित्यर्थः। तन्मनः आत्मनीति विषयसप्तमी। आत्मविषयके ज्ञाने अध्यवसायरूपे नियच्छेत्। अध्यवसायानुगुणप्रवृत्ति कुर्यादित्यर्थः। ज्ञानमध्यवसायं महति=वशीकार्यताया मध्यवसायादपि परे आत्मनि नियच्छेत=आत्मविषयं कुर्यात; आत्मन्येवोपादेयताबुद्धिं कुर्यादित्यर्थः; तत् तं आत्मानं शान्ते=स्वतोऽशनायादिरहिते आत्मनि=परमात्मनि नियच्छेत्=न्यस्येत्; परमात्मनि स्वरक्षाभरं समर्पयेदिति।

तथा "वदतीतिचेन्न प्राज्ञोहि प्रकरणा" दिति सूत्रेणापि कठवल्ल्या भगवत्परत्वं प्रदर्शितं।

"अशब्दमस्पर्शमरूपमव्ययं तथाऽरसंनित्यमगंधवच्च यत्।
अनाद्यनन्तं महतः परंध्रुवं निचाय्यतं मृत्युमुखात्प्रमुच्यते"॥

इत्ययं मन्त्रः कापिलतन्त्रसिद्धस्य प्रधानस्य ज्ञेयत्वं वदतीतिचेत्तन्न। प्राज्ञः=परमात्मा हि तत्र निचाय्यत्वेनोच्यते तस्यैव प्रकृतत्वादिति सूत्रार्थः।

अयंभावः —अशब्दमस्पर्शमरूपमित्यादिना शब्दस्पर्शादि शून्यावस्थापन्नमव्यक्तं स्वरसत उपस्थाप्यते । तस्य च निचाय्यतमिति ज्ञेयत्वमनेन मन्त्रेणोच्यत इति चेन्नेदं युक्तम् ।

"विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः ।

सोध्वनः पारमाप्नोति तद्विष्णोः परमं पद"मिति विष्णुशब्देन प्रकृतस्य परमात्मन एवास्मिन्मन्त्रे निचाय्यतमित्यनेन ज्ञेयत्वमुच्यते । न कापिलतन्त्र सिद्धप्रधानस्येति ॥

चमसाधिकरणे—"ज्योतिरुपक्रमातु तथाह्यधीयत एके" इति सूत्रेण श्वेताश्वतरोपनिषदि

"अजामेकांलोहितशुक्लकृष्णां बह्वीः प्रजास्सृजमानां सरूपाः ॥ अजोह्येको जुषमाणोनुशेते जहात्येनां भुक्तभोगामजोन्य" इति मन्त्रस्य भगवतः कारणत्वपरत्वं प्रदर्शितम् । अस्मिन्मन्त्रे अजाशब्देन ज्योतिरुपक्रमा परब्रह्मभूतभगवत्कारणिका प्रकृतिरुच्यते । एके तैत्तिरीयशाखिनः तथा भगवत्कारणकत्वेन एनामजामधीयते हीति सूत्रार्थः ।

अयं भावः—तैत्तिरीयोपनिषदि नारायणे ।

"अणोरणीयान्महतोमहीयानात्मा गुहायान्निहितोऽस्य जन्तोः ॥ तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीश"मिति मन्त्रेण परमात्मानमुपक्रम्य, "सप्त प्राणाः प्रभवन्ति तस्मा"दित्यादिना प्राणसमुद्रपर्वतादीनां तस्मादुत्पत्यभिधानप्रकरणे ।

"अजामेकां लोहित शुक्लकृष्णां
बह्वीम्प्रजां जनयन्तीं सरूपाम् ।
अजोह्येकोजुषमाणोनुशेते
जहात्येनाम्भुक्तभोगामजोऽन्यः ॥"

इति मन्त्रः पठ्यते । स च प्रागुदाहृतश्वेताश्वतरमन्त्रसमानार्थः । परमात्मकार्य वर्गप्रपंचन प्रकरणपठितेऽस्मिन्मन्त्रे प्रतिपाद्यमानाऽजापि परमात्मकार्यतया प्रतिपिपादयिषितेति प्रकरणपाठादवगम्यते । तत्र प्रक्रान्तः परमात्मा नारायण इति च 'अणोरणीयान्महतोमहीयानात्मा गुहायां निहितोऽस्यजन्तो' रित्यत्र आत्मा गुहायां निहित इत्यनेन अन्तःशरीरे निहितोगुहायामज एको नित्य इति सुबालोपनिषत्प्रत्यभिज्ञानादवगम्यते । तथा मुण्डकोपनिषदि—

"दिव्योह्यमूर्तः पुरुषस्सबाह्याभ्यन्तरोह्यजः ।
अप्राणोह्यमनाश्शुभ्रो ह्यक्षरात्परतः पर ॥" इति

दिव्यं पुरुषमुपक्रम्य

"एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च ।
खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी" ति

मन्त्रेण

"नारायणात्प्राणो जायते मनस्सर्वेन्द्रियाणि च ।
खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी" ति

नारायणोपनिषन्मन्त्र प्रत्यभिज्ञापकेन प्रक्रान्तो दिव्यपुरुषो नारायण इति स्पष्टीकृत्य, तस्मात्प्रपंचोत्पत्ति मभिधाय,

तत्प्रकरणे "सप्तप्राणाः प्रभवन्ति तस्मात्" "अतस्समुद्रा गिरयश्च सर्वे" इति तैत्तिरीयके श्रुतस्यैव मन्त्रद्वयस्य पठनेनाऽस्मिन्मन्त्रद्वये तदादिशब्दनिर्दिष्टं जगत्कारणं वस्तु नारायण एवेति स्फुटीकृतम ॥ अतस्तैत्तिरीयकेऽजामन्त्रे प्रतिपन्नाऽजा नारायणकार्यतया तदात्मिका प्रकृतिरिति सिद्धम् । अतस्तदैकार्थ्याच्छ्वेताश्वतरेऽजामन्त्रेपि तथाविधैवप्रकृतिर्विवक्षितेति निश्चीयत इति ॥

संख्योपसंग्रहाधिकरणे—"न संख्योपसंग्रहादपि नाना भावादतिरेकाच्चेति" सूत्रेणेन्द्रियाणां भूतानां च नारायणात्मकत्वं व्यवस्थापितम् । संख्योपसंग्रहादपि=यस्मिन्पंचपंचजना इति मन्त्रे पंचपंचजना इत्यनेन पंचविंशतिसंख्याग्रहणेपि न कापिलतन्त्रसिद्धतत्व प्रत्यभिज्ञा; कापिलतन्त्रसिद्धतत्वेभ्यो विलक्षणत्वादेतेषां; आकाशात्मनो रतिरिक्तयोरत्रश्रवणाच्चेति सूत्रार्थः ॥

अयं भावः—"यस्मिन्पंचपंचजना आकाशश्च प्रतिष्ठितः।

तमेव मन्य आत्मानं विद्वान्ब्रह्मामृतोऽमृत"मित्यस्मिन्मन्त्रे पंचशब्दविशेषित पंचजनशब्दनिर्दिष्टानां यस्मिन्प्रतिष्ठिता इति यच्छब्दनिर्दिष्टब्रह्माश्रितत्वकथनेन ब्रह्मात्मकत्वं प्रतीयते ततश्च न कापिलतन्त्रसिद्धतत्वानामत्रप्रत्यभिज्ञा; तेषामब्रह्मात्मकत्वेन तैरभ्युपगमात् । परन्तु "प्राणस्य प्राणमुतचक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसोये मनोविदु"रित्यनन्तरमन्त्रेण पूर्वमन्त्रे पंचजनशब्दनिर्दिष्टानि त्वगादीनीन्द्रियाणीति विज्ञायते । तत्र हि प्राणशब्देन वायुसम्बन्धिस्पर्शनेन्द्रिय-

मुच्यते। अन्नमित्यन्नशब्दवाच्यपृथिवी सम्बन्धिघ्राणेन्द्रियमुच्यते तेनैवाऽन्नशब्देन अद्यतेऽनेनेति व्युत्पत्त्या तन्त्रेण रसनेन्द्रियमप्युच्यते। अवशिष्टानीन्द्रियाणि स्वशब्देनैवोपात्तानि। एवमिन्द्रियाणि पंचजनशब्दार्थ इति निश्चिते सति "चक्षुश्च द्रष्टव्यं च नारायणः श्रोत्रं च श्रोतव्यंच नारायण" इत्यादिना सुबालोपनिषदि सामानाधिकरण्येनोक्तमिन्द्रियाणां नारायणात्मकत्वमत्र वैयधिकरण्येनोच्यत इति विज्ञायते । अतो न कापिलतन्त्रासिद्धतत्वप्रतिपादनपरेयं श्रुतिरिति ॥

कारणत्वाधिकरणे—"कारणत्वेन चाकाशादिषु यथा व्यपदिष्टोक्ते"रिति सूत्रेण तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियते त्यादिकारण वाक्यानां नारायणपरत्वं प्रदर्शितम् । "न संख्योपसंग्रहादपी"ति पूर्वसूत्रान्नेति पदमनुषज्यते न सांख्याभिमतं प्रधानं जगत्कारणतया वेदान्तेषु प्रतिपाद्यते, यथा व्यपदिष्टस्य जन्माद्यधिकरण प्रभृतिष्वधिकरणेषु प्रतिपादितप्रकारस्य नारायणस्यैवाकाशादिकारणत्वेन क्वचिषु सृष्टिवाक्येषूक्तेरिति सूत्रार्थः ।

अयंभावः—आनन्दवल्ल्यां "तस्माद्वा एतस्मादात्मन अकाशस्संभूत" इत्यादिनाऽकाशादिकारणत्वेन प्रक्रान्त आत्मा "तस्माद्वा एतस्माद्विज्ञानमयात् अन्योन्तर आत्माऽनन्दमय" इत्युपसंहृतः । तत्र चा"न्तर आत्मे"त्यनेन "एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्योदेव एको नारायण" इति सुबालोपनिषत्प्रत्यभिज्ञाना दाकाशादि कारणत्वेनोक्त आत्मा नारायण इति निर्णीतम् ॥ तथा "सदेवसोम्येदमग्र आसीत्

तदैक्षत तत्तेजो सृजते"त्यादिना छान्दोग्ये तेजः प्रभृति कारणत्वेन प्रक्रान्तं सत् "सेयन्देवता इमास्तिस्रोदेवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरो" दित्यनन्तरवाक्येन "सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन्यदास्त" इति पुरुषसूक्तवाक्य प्रत्यभिज्ञापकेन नारायण इति समर्थितम्। "अथ पुरुषोह वै नारायणो कामयत प्रजास्सृजेयेति नारायणात्प्राणोजायत" इत्यादिना नारायणोपनिषदि साक्षादेव नारायणस्य जगत्कारणत्वं प्रत्यपादि अतो "भूयसांस्याद्बलीयस्त्व"मिति न्यायेन नारायण कारणता वादि बहुश्रुत्यनुरोधेन "तद्धेदं तर्ह्यव्याकृतमासी'दित्यत्राऽप्यव्याकृतशब्देन नामरूप विभागशून्यत्वरूप सूक्ष्मावस्थाऽपन्न प्रधानशरीरको नारायण एव कारणत्वेन प्रतिपाद्यते इति ॥

जगद्वाचित्वाधिकरणे—"जगद्वाचित्वा"दिति सूत्रेण "यो वै बालक एतेषां पुरुषाणां कर्ता यस्य वै तत्कर्म सवै वेदितव्य" इति कौषीतकीवाक्यस्य नारायणपरत्वं प्रदर्शितम्। यस्य वा एतत्कर्मेत्यत्र कर्मशब्दः क्रियत इति कर्मेति व्युत्पत्त्या कार्यवाची; न तु पुण्याऽपुण्यरूपकर्मवाची; ततश्च एतेषामादित्यपुरुषादीनां यः कर्ता किं बहुना कृत्स्नमेतज्जगद्यस्य कार्यभूतं सवेदितव्य इति श्रुत्यर्थः ततश्च कृत्स्न जगत्कारण मनूद्य तस्य वेदितव्यत्वमत्र विधीयते ततश्च—"तमेवं विद्वानमृत इह भवतीति"त्यमृतत्वाय वेद्यतयोक्त महापुरुष प्रत्यभिज्ञानादत्र वेदितव्यतयोक्तो नारायण एवेति सूत्रार्थः।

वाक्यान्वयाधिकरणे—"वाक्यान्वयात्" "अवस्थितेरितिकाशकृत्स्न" इति सूत्राभ्यां मैत्रेयीब्राह्मणस्य नारायणपरत्वं व्यवस्थापितम् । प्राकरणिकवाक्यावयवानां मिथस्सामंजस्येनान्वयादात्मावा अरे द्रष्टव्य इत्यत्र द्रष्टव्यत्वेन श्रुत आत्मा नारायण इति प्रथमसूत्रार्थः ।

अयं भावः—"येनाहंनामृतास्यां किमहं तेन कुर्यां यदेव भगवान्वेद तदेव मे ब्रूही"त्यमृतत्वप्राप्त्युपाये पृष्टे "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य"इत्यमृतत्व प्राप्तये द्रष्टव्यतयोपदिश्यमानोयमात्मा यद्दर्शनममृतत्वसाधनतया वेदान्तेषु प्रसिद्धं स इति निर्णीयते स च नारायण एव "तमेवं विद्वानमृत इहभवतीत्यादिषु" तद्वेदनस्यैवामृतत्वसाधनताश्रवणात् । एवमस्मिन्नेव प्रकरणे उत्तरत्र "अस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदोयजुर्वेदस्सामवेदोऽधर्वांगिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकास्सूत्राण्यनुव्याख्यानान्यस्यैवैतानि सर्वाणि निश्वसितानीति" प्रकृतात्मविषयेण वाक्येन "तस्यैतस्य महतोभूतस्य निश्वसितमेवैतदृग्वेदो यजुर्वेदस्सामवेदोऽधर्ववेदश्शिक्षाकल्पो व्याकरणं निरुक्तं च्छन्दोज्योतिषामयनं न्यायोमीमांसा धर्मशास्त्राणि व्याख्यानान्युपव्याख्यानानीति" सुबालोपनिषद्वाक्य प्रत्यभिज्ञानात्तत्प्रातिपाद्यो नारायण एवायमात्मेति निश्चीयते इति । स्वशरीरभूते जीवात्मन्यात्मतयाऽवस्थानाज्जीववाचिना विज्ञानघन एवैतेभ्यो भूतेभ्यस्समुत्थाय तान्येवानु विनश्यतीत्यत्र विज्ञानघनशब्देन परमात्माभिधानमिति द्वितीयसूत्रार्थः ।

अयं भावः— "य आत्मनितिष्ठन्नात्मनोन्तरोऽयमात्मा न वेद यस्यात्मा शरीरं योक्षरमन्तरे संचरन्यस्याक्षरं शरीर" मित्यादिषु परमात्मनो नारायणस्य जीवात्मन्यन्तरात्मतयाऽवस्थानस्य जीवात्मनां तच्छरीरत्वस्य चाभिधानाच्छरीरवाचिनां शब्दानां शरीरिपर्यन्त वाचकताया लोकवेदयोर्दृष्टत्वाच्चात्र जीववाचिना विज्ञानघन शब्देन तच्छरीरको नारायण एवाभिधीयत इति ॥

प्रकृत्यधिकरणे—"आत्मकृतेः। योनिश्चहिगीयत" इति सूत्राभ्यां नारायणस्यैव जगन्निमित्तोपादानत्वं व्यवस्थापितम्। स्वयमेव स्वात्मनो बहूकरणान्नारायण एव जगतोनिमित्तमुपादानं चेति प्रथमसूत्रार्थः। आनन्दवल्यां "सोकामयत बहुस्यां प्रजायेयेती"त्यानन्दमयात्मानं प्रकृत्य, "असद्वा इदमग्र आसीदित्य सच्छब्देन सूक्ष्मावस्थाविशिष्टवाचिना तमेवाऽनन्दमयात्मानं समाकृष्य तदात्मानं स्वयमकुरुतेति तस्य स्वयमेव स्वात्मनो जगद्रूपेण बहूकरण प्रतिपादनादवस्थाश्रयत्वा दुपादानत्वमवस्था प्रयोजकसंकल्पाश्रयत्वान्निमित्तत्वं च सिद्धमिति भावः—

अत्र आदित्यमण्डलान्तर्वर्ति पुंडरीकाक्षादनन्यानन्दमय विषयश्रुत्या ब्रह्मणोऽभिन्न निमित्तो पादानत्वसमर्थनान्नारायण एव जत्कारणं ब्रह्मेति सूत्रकाराभिप्रायस्सिद्धः।

यदापश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्।

तदा विद्वान्पुण्यपापे विधूय निरंजनः परमं साम्यमुपैती''ति श्रुत्या ब्रह्मणो जगद्योनित्व प्रतिपादनादुपादानत्वं कर्तृत्वप्रतिपादनान्निमित्तत्वं च सिद्धमिति सूत्रार्थः । अत्रापि-रुक्मवर्णत्व प्रत्यभिज्ञापितादित्यवर्ण महापुरुष विषयश्रुत्या ब्रह्मणो निमित्तोपादानत्व व्यवस्थापनान्नारायण एव जगत्कारणमिति सूत्रकाराभिप्रायस्स्पष्टः ॥ तदेवं समन्वयाध्याये कारण वाक्यानां सर्वेषां तैस्तैः प्रत्यभिज्ञापकलिंगैर्नारायण एव समन्वयस्य प्रदर्शितत्वेन नारायण एव जगत्कारणत्वलक्षणलक्षितं परतत्वा पराभिधानं परं ब्रह्मेति शारीरकमीमांसा प्रणेतुर्भगवतो वेदव्यासस्य सिद्धान्त इति सिद्धम् ।

इति श्रीव्याससिद्धान्तमार्ताण्डे

प्रथमः परिच्छेदः ॥

॥ श्रीः ॥

---

॥ श्रीमते हयग्रीवाय नमः ॥

# ॥ व्याससिद्धान्तमार्ताण्डे द्वितीयः परिच्छेदः ॥

---

प्रथमे परिच्छेदे नारायण एव परं ब्रह्मेति शारीरकमीमांसा प्रणेतुर्भगवतो वेदव्यासस्य सिद्धान्त इत्ययमंश उपपादितः । इदानीमप्राकृतदेशविशेषे तत्सायुज्य प्राप्तिरेवापुनरावृत्तिलक्षणो मोक्षपुरुषार्थ इति तत्सिद्धान्त इत्ययमंश उपपाद्यते ।

शारीरकमीमांसायां फलाध्याये द्वितीयपादे वागधिकरणप्रभृतिभिश्चतुर्भिरधिकरणैः सेन्द्रियस्य सप्राणस्य जीवस्योत्क्रान्तिप्रकारमभिधाय, आसृत्युपक्रमाधिकरणे ब्रह्मविदस्तदितरस्य च गत्युपक्रमभूतनाडीविशेषप्रवेशात् प्राक् तथाविधोत्क्रान्तिप्रकारस्याविशिष्टतामभिधाय, विदुष उत्क्रान्तिप्रतिषेधशङ्कां च परिहृत्य, तदोकोऽधिकरणे ब्रह्मविदो मूर्धन्यनाड्यैव निष्क्रमणम्, अब्रह्मविदां चान्याभिरेव गमनमितीमं विशेषं निरूप्य, तृतीयपादे आर्चिराद्यधिकरणे मूर्धन्यनाड्या निष्क्रान्तस्यार्चिरादिना मार्गेण प्रस्थानं व्यवस्थाप्य, आतिवाहिकाधिकरणे अर्चिरादेरमानवान्तस्यातिवाहिकतां वैद्युतापराभिधानस्यामानवस्यैवाव्यवधानेन ब्रह्मप्रापकत्वं चाभिधाय, कार्याधिकरणे आर्चिरादिना प्रस्थितस्य चतुर्मुखलोक प्राप्तिपक्षप्रतिक्षेपपूर्वकं परज्योतिःशब्दितपरवासुदेवाख्यपरब्रह्मप्राप्तिं सिद्धान्तयित्वा, चतुर्थपादे संपद्याविर्भावाधिकरणे अर्चिरा-

दिना प्रस्थितस्य ब्रह्मविद्यानिष्ठस्य प्रकृतिमण्डलस्योपरिष्टात् परज्योतिः शब्दितादित्यवर्णदिव्यमङ्गलविग्रहविशेषविशिष्टवासुदेवाख्यपरब्रह्मोपसंपत्त्या कर्मकृतस्वरूपतिरोधाननिवृत्तिमुक्त्वा, अविभागाधिकरणे तिरोधाननिवृत्त्या परमात्मापृथक् सिद्धविशेषणत्वरूपस्वात्मयाथात्म्यानुभवमभिधाय, ब्राह्माधिकरणे प्राक् संसारदशायां परमात्मसंकल्पेन तिरोहितस्यापहतपाप्मत्वादि सत्यसंकल्पत्वान्त गुणाष्टकस्याविर्भावमुक्त्वा, संकल्पाधिकरणे आविर्भूतस्वरूपस्य तस्येश्वरस्येव संकल्पमात्रेणैवाभिमतसर्वार्थप्राप्तिमभिधाय, जगद्व्यापारवर्जाधिकरणे सत्यसंकल्पस्यापि तस्य न जगत्सृष्ट्यादिकर्तृत्वम्, तत्तु परमपुरुषस्यैव, मुक्तस्य परब्रह्मणा परमसाम्यश्रुतिरपि परिपूर्णब्रह्मानुभवरूपभोगमात्र विषया, इति प्रतिपाद्य, "अनावृत्तिः शब्दात् इति" सूत्रेणोक्तरीत्या परं ज्योतिरुपसंपद्याविर्भूतस्वरूपस्य परिपूर्णं ब्रह्मानुभवतः पुनः कदापि न संसारप्राप्तिरित्युपसंहृतम्।

अतः प्रकृतिमण्डलस्योपरि अप्राकृतपरमपदाख्यस्थान विशेषावस्थितपरज्योतिःशब्दवाच्यादित्यवर्णविग्रहविशेषविशिष्टवासुदेव प्राप्त्यनन्तरभाविनी कर्मकृतस्वरूपतिरोधाननिवृत्तिपूर्वकतत्सायुज्यप्राप्तिरेवापुनरावृत्तिलक्षण मोक्षपुरुषार्थ इति शारीरकमीमांसाप्रणेतुर्भगवतो वेदव्यासस्य सिद्धान्त इति निश्चीयते।

तथाहि; चतुर्थाध्यायद्वितीयपादे आसृत्युपक्रमाधिकरणे सूत्रम्—"समानाचासृत्युपक्रमादमृतत्वं चानुपोष्य" इति। बृहदारण्यके षष्ठाध्याये चतुर्थब्राह्मणे—"यदा सर्वे प्रमुच्यन्ते

कामा येऽस्य हृदि श्रिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥" इति मन्त्रेण ब्रह्मविद इहैवामृतत्व ब्रह्मप्राप्त्यो-राम्नानात्, ब्रह्मविद उत्क्रान्तिर्नास्तीति पूर्वपक्षे प्राप्ते, अनेन सूत्रेण सिद्धान्तः क्रियते ।

अत्र प्रकरणात् 'उत्क्रान्तिः' इत्यध्याहार्यम् । ततश्च इयमुत्क्रान्तिः आसृत्युपक्रमात् = आगत्युपक्रमा॰ नाडी प्रवेशात् प्रागिति यावत्; समाना = ब्रह्मविदस्तदितरस्य च विशेषाभाववती; चो भिन्नक्रमः; अवधारणार्थः; अनुपोष्य च = अनुपोष्यैव = देहेन्द्रियादिसंबन्धमदग्ध्वैवेत्यर्थः; उपपूर्वात् 'उष दाहे' इत्यस्माद्धातोर्ल्यपि रूपम्; यदमृतत्वं तत् श्रुतावमृतशब्देन विवक्षितमिति सूत्रार्थः ।

अयं भावः—छान्दोग्ये सद्विद्याप्रकरणे "अस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि संपद्यते, मनः प्राणे, प्राणस्ते-जसि" इत्यादिना श्रुता उत्क्रान्तिर्ब्रह्मविद्यानिष्ठस्य तदन्यस्य च नाडी प्रवेशात् प्रागविशिष्टा । कठवल्लीषु षष्ठवल्ल्याम्—"शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति ॥" इति श्रुतौ ब्रह्मविदो मूर्धन्यनाड्या ऊर्ध्वमुत्क्रम-णश्रवणेन ब्रह्मविदोऽप्युत्क्रान्तिरस्तीत्यवगमात्; ब्रह्मविदो मूर्ध-न्यनाड्या निष्क्रमणम्, अन्येषामन्यनाडीभिरिति नाडीप्रवे-शदशायामेव विशेषश्रवणेन ततः पूर्वमुत्क्रान्तौ विशेषो नास्तीत्यवगमाच्च ।

तर्हि प्रागुदाहृताया ब्रह्मविद इहैवामृतत्व ब्रह्मप्राप्ति-श्रुतेः कथमुपपत्तिरिति चेत्, ब्रह्मोपासकस्य कर्मकृतदेहेन्द्रियादि संबन्धे स्थित एव विद्यामाहात्म्यकृतमुत्तरपूर्वाघाश्लेषविनाशरूपममृतत्वं तत्र प्रतिपाद्यते; नतु मुक्तिरूपममृतत्वम्। कठवल्लीषु षष्ठवल्ल्या मिममेव मन्त्रं पठित्वा, तदुत्तरम् "शतं चैका च" इत्यादिपूर्वोक्तमन्त्रस्य पठनात्; तस्मिंश्च मन्त्रे पूर्व-मन्त्रप्रस्तुतस्यैव ब्रह्मविदो मूर्धन्यनाड्या शरीरान्निष्क्रम्योर्ध्व-देशप्राप्त्यनन्तरमेवामृतत्वशब्दितमुक्तिप्राप्त्यभिधानात्। एवम् 'अत्र ब्रह्म समश्नुते' इति तत्र श्रुतब्रह्मप्राप्तिरपि उपासन-कालिक ब्रह्मानुभवाभिप्रायेति न कश्चिद्विरोध इति।

तस्मिन्नेवाधिकरणे गुणसूत्रम्—"प्रतिषेधादिति चेन्न शारीरात् स्पष्टोह्येकेषाम्" इति। उत्क्रान्तिप्रतिषेधदर्शनात् ब्रह्मविदोनोत्क्रान्तिरिति चेत्, तन्न, शारीरादात्मन उत्क्रान्तेरेव तत्र प्रतिषिध्यमानत्वात्; हि यतः अयमंशः एकेषां शाखिन-शाखायां स्पष्ट इति सूत्रार्थः।

अयं भावः—बृहदारण्यके षष्ठाध्याये चतुर्थब्राह्मणे—"अथाकामयमानो योऽकामो निष्काम आप्तकाम आत्मकामः" इति ब्रह्मविदं प्रस्तुत्य "न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति" इति ब्रह्मविद उत्क्रान्तिः प्रतिषिध्यते। अतो ब्रह्मविद उत्क्रान्तिर्नास्तीति चेत्, नैतद्युक्तम्; माध्यंदिनशाखायां समानप्रकरणे "योऽकामो निष्काम आप्तकाम आत्मकामो न तस्मात् प्राणा उत्क्रामन्ति" इत्यत्र 'तस्मात्' इति तच्छब्देन ब्रह्मविदं परामृश्य प्राणानां तदपादानकोत्क्रां

न्तिप्रतिषेधस्य स्पष्टं प्रतिपन्नतया तदैकार्थ्येनोदाहृतकाण्वशाखायामपि "न तस्य प्राणा उत्क्रामन्ति" इत्यत्र 'तस्य' इत्यस्य तस्मादित्यर्थाङ्गीकारस्यैव युक्ततया आसन्नमुक्तेर्जीवात्मनः सकाशादेव प्राणानामुत्क्रान्तिस्तत्र प्रतिषिध्यते; नतु जीवस्य शरीरादुत्क्रान्तिः । अतोऽस्त्येव ब्रह्मविदोऽपि शरीरादुत्क्रान्तिः ।

न च बृहदारण्यके पञ्चमाध्याये द्वितीयब्राह्मणे "यत्रायं पुरुषोम्रियते उदस्मात् प्राणाः क्रामन्त्याहो न" इत्यार्तभागप्रश्नस्य "नेति होवाच याज्ञवल्क्योऽत्रैव समवलीयन्ते स उच्छ्वयत्याध्मायत्याध्मातो मृतः शेते" इत्येवंरूपे याज्ञवल्क्यप्रतिवचने 'नेतिहोवाच' इत्यनेन प्राणानामुत्क्रान्ति प्रतिषिध्य, "स उच्छ्वयति" इत्यादितदनन्तरवाक्ये 'सः' इत्यनेन यस्मादुत्क्रान्तिः प्रतिषिद्धा, तं परामृश्य, तस्योच्छ्वयनाध्मानादिकथनात् तेषां च शरीरधर्मत्वात् शरीरादेव प्राणानामुत्क्रान्तिस्तत्र प्रतिषिध्यत इति स्फुटं प्रतीयते । अतस्तदैकार्थ्यात् "न तस्य प्राणा उत्क्रामन्ति" इत्युदाहृतकाण्वशाखाषष्ठाध्यायवाक्येऽपि तच्छब्दपरामृष्टविद्वत्संबन्धिप्राणानां शरीरादुत्क्रान्तिरेव प्रतिषिध्यत इति युक्तमाश्रयितुम् । तथा माध्यंदिनशाखायामपि "न तस्मात् प्राणा उत्क्रामन्ति" इत्यत्रात्मपरामर्शिनापि तच्छब्देनाभेदोपचाराच्छरीरमेव प्रतिपाद्य, प्राणानां शरीरादुत्क्रान्तिरेव प्रतिषिध्यत इत्यास्थेयमिति वाच्यम् । उपदर्शितार्तभागप्रश्नतत्प्रतिवचनसंदर्भस्याब्रह्मविद्विषयत्वेन ब्रह्मविद्विषययोरुक्तकाण्वमाध्यंदिनशाखावाक्ययोस्तदैकार्थ्यस्यानाश्रयणीयतया उक्तकाण्वशाखावाक्यस्योदाहृतमाध्यंदिनशा-

खावाक्येन सममैकार्थ्यस्यैव न्याय्यत्वात् । अविदुषः शरीरा-दुत्क्रान्तेरवर्जनीयतया तत्प्रतिषेधायोगेनाविद्वद्विषयस्यार्त-भागप्रश्नप्रतिवचनस्यापि प्राणानां शारीरादुत्क्रान्तिप्रतिषेध-परत्वस्यैवावश्यवक्तव्यत्वाच्च ।

आर्तभागप्रश्नतत्प्रतिवचनसंदर्भस्याब्रह्मविद्विषयत्वं कथमवगम्यत इति चेत्, उच्यते—"यत्रास्य पुरुषस्य मृत स्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्यम्" इत्यादिना "क्वायं तदा पुरुषो भवति?" इत्यन्तेन तत्तदिन्द्रियाभिमानिदेवता पक्रमणदशायां मृतः पुरुषः किमाश्रित्य तिष्ठती त्यार्तभाग-प्रश्नान्तरमुपक्षिप्य "तौहोत्क्रम्य मन्त्रयांचक्राते तौह यदूचतुः कर्म हैव तदूचतुः अथ यत् प्रशशंसतुः कर्म हैव तत् प्रशशं-सतुः पुण्यो वै पुण्येन कर्मणा भवति पापः पापेनेति" इत्य-न्तेन पुण्यपापरूपं कर्मैव तदाश्रयः, तत्तत्कर्मानुगुण्येनैव शरीरान्तरं भजत इति याज्ञवल्क्येनार्तभागेन च रहसि नि-श्चितमिति प्रतिपादनात्, पुण्यपापरूपकर्मपरवशाविषय एवाय-मार्तभागप्रश्नतत्प्रतिवचनसंदर्भः कृत्स्नोऽपीत्यवगम्यते । एव-मार्तभागप्रश्नतत्प्रतिवचनेषु क्वचिदपि ब्रह्मविद्याप्रसङ्गादर्शना-दप्यविद्वद्विषय एवायमार्तभाग प्रश्नप्रतिवचनसंदर्भः कृत्स्नोऽ-पीत्यवगम्यते ।

तथाहि—आर्तभागप्रश्नेषु पञ्चसु प्रथमेन "कति ग्रहाः? कत्य ग्रहाः?" इत्यादिना कैरयं पुरुषो वशीकृतः संसरतीति पृष्टम् । गृह्णन्त्यात्मानं स्ववशं कुर्वन्तीति ग्रहाः, ते कति, के इति प्रश्नार्थः । "प्राणोवै ग्रहः" इत्यादिना अष्टभिर्घ्राणादी-

न्द्रियैर्गन्धादिभिस्तद्विषयैश्च स्ववशीकृतोऽयं पुरुषः संसरति इति प्रतिवचनमभिहितम् ।

द्वितीयेन "यदिदं सर्वं मृत्योरन्नं का स्वित् सा देवता यस्या मृत्युरन्नम्" इति प्रश्नेन येन मृत्युना सर्वमिदं नाश्यते तस्य मृत्योर्नाशकः कः इति पृष्टम् । "अग्निर्वै मृत्युः सोऽपामन्नम्" इत्यनेन सर्वस्यास्य नाशकत्वादग्निर्मृत्युः, तस्याप्यापो नाशिका इति प्रतिवचनमुक्तम् ।

तृतीयेन —"यत्रायं पुरुषो म्रियते उदस्मात् प्राणाः क्रामन्ति ! आहो नेति इति प्रश्नेन 'म्रियमाणात् पुरुषात् प्राणा उत्क्रामन्ति ! अथवा नोत्क्रामन्ति !' इति प्रश्नः कृतः । "नेति होवाच याज्ञवल्क्यः" इत्यादिना प्रत्युत्तरमभिहितम् ।

चतुर्थेन —"यत्रायं पुरुषो म्रियते किमेनं न जहाति इत्यनेन 'म्रियमाणं पुरुषं किं न त्यजति ?' इति प्रश्नः कृतः । "नामेति" इत्यनेन म्रियमाणं पुरुषं नामधेयं न त्यजतीति प्रत्युत्तरमुक्तम् । पञ्चमप्रश्नप्रतिवचनप्रकारस्तु पूर्वमेव विवृतः । न ह्येतेषु प्रश्नतत्प्रतिवचनेषु ब्रह्मविद्याप्रसङ्गो दृश्यते । अतः "यत्रायं पुरुषो म्रियते उदस्मात् प्राणाः क्रामन्त्याहोन" इत्ययं प्रश्नः सर्वप्राणिविषयः । ततश्च प्राणिनां मरणदशायां शरीरे प्राणानामनवस्थानस्यासंदिग्धतया नायं शरीरात् प्राणानामुत्क्रान्तितदभावविषयः प्रश्नः; अपितु शारीरादुत्क्रान्त्यनुत्क्रान्तिविषय एव ।

अयमत्र प्रष्टुरभिप्रायः—प्राणिनां मरणदशायां यथा वृक्षाद्विहगा यथायथमुड्डीय गच्छन्ति एवमात्मा प्राणाश्च यथा-

यथमुत्क्रम्य गच्छन्ति ? आहोस्विच्छरीरादुत्क्रान्ता अपि प्राणा आत्मनो न विश्लिष्यन्ति, अपितु तत्संश्लिष्टास्तेनैव सह गच्छन्ति ? इति ।

अत्रोत्तरमुक्तम्—"नेति होवाच याज्ञवल्क्योऽत्रैव समवलीयन्ते' इति । आत्मनः सकाशात् प्राणा नोत्क्रामन्ति अत्रैवात्मन्येव समवलीयन्ते संश्लिष्यन्तीति तदर्थः । "स उच्छ्वयत्याध्मायत्याध्मातो मृतः शेते" इति तदनन्तरवाक्ये तु देहात्मनोरभेदोपचारेण देहधर्मा उच्छूनत्वादय आत्मनि व्यवहृता इति न तद्विरोधः । तदेवमुदाहृतार्तभागप्रश्नप्रतिवचनसंदर्भस्याविद्वद्विषयत्वेन ब्रह्मविद्विषययोरुपदर्शितकाण्वमाध्यंदिनशाखावाक्ययोस्तदैकार्थ्यस्यानाश्रयणीयत्वात् तत्रापि शारीरादेव प्राणानामुत्क्रान्तेः प्रतिषिद्धत्वाच्च "न तस्य प्राणा उत्क्रामन्ति" इत्यत्र न तदैकार्थ्येन शरीरात् प्राणानामुत्क्रान्तिप्रतिषेधः, अपितु "न तस्मात् प्राणा उत्क्रामन्ति" इति समानप्रकरणस्थमाध्यंदिनशाखावाक्यैकार्थ्येन शारीरादेव प्राणानामुत्क्रान्तिप्रतिषेध इति ।

यत्तु "प्रतिषेधादिति चेन्नशारीरात" इति; "स्पष्टो ह्येकेषाम्" इति च द्वे सूत्रे । तत्राद्यं पूर्वपक्षसूत्रम् । द्वितीयं तु सिद्धान्तसूत्रम् । अथाकामयमानो योऽकामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्ति इति ब्रह्मविदः शरीरादुत्क्रान्ति प्रतिषेधान्नास्ति ब्रह्मविद उत्क्रान्तिरिति चेत्, तन्न; शारीरादात्मनो हि प्राणानामुत्क्रान्तिस्तत्र प्रतिषिद्धा, न शरीरात् । कथमिदमवगम्यत इति चेत्, समानप्रकरणमाध्यं

दिनशाखायां "न तस्मात् प्राणा उत्क्रामन्ति" इत्यत्र 'तस्मात्' इति तच्छब्देनात्मकामं ब्रह्मविदं परामृश्य तस्मात्प्राणानामुत्क्रान्तिप्रतिषेधदर्शनेन तदैकार्थ्यात् "न तस्य प्राणा उत्क्रामन्ति" इत्यत्रापि तस्येति षष्ठ्या अपादानत्वार्थकत्वनिश्चयात् । अतोऽस्त्येव ब्रह्मविदोऽपि शरीरादुत्क्रान्तिरिति प्रथमसूत्रार्थः ।

अस्मिन् पूर्वपक्षे सिद्धान्तमाह—"स्पष्टो ह्येकेषाम्" इति । यदुक्तं ब्रह्मविदोऽप्यस्ति देहादुत्क्रान्तिः प्रतिषेधस्य शारीरात् प्राणानामुत्क्रान्तिविषयत्वादिति, नैतदस्ति ; यतो देहादेवोत्क्रान्तिप्रतिषेध एकेषां समाम्नातॄणां स्पष्ट उपलभ्यते ।

तथाहि—आर्तभागप्रश्ने "यत्रायं पुरुषो म्रियते उदस्मात् प्राणाः क्रामन्ति ? आहो न?" इत्यत्र "नेतिहोवाच याज्ञवल्क्यः" इति प्राणानामनुत्क्रान्तिमभिधाय प्राणानामनुत्क्रान्तावमृतत्वाभावशङ्कां शमयितुम् "अत्रैव समवलीयन्ते" इति प्राणानां प्रविलयमुक्त्वा "स उच्छ्वयत्याध्मायत्याध्मातो-मृतः शेते" इत्यनन्तरवाक्ये 'स' शब्देन प्रकृतमुत्क्रान्त्यवधिं परामृश्य तस्योच्छ्वयनादयो धर्मा आम्नाताः । ते च शरीरस्य संभवन्ति नात्मनः । अतोऽत्र विदुषः शरीरादेवोत्क्रान्तिप्रतिषेधः स्पष्टमुपलभ्यते । अतस्तदैकार्थ्यात् "न तस्मात् प्राणा उत्क्रामन्ति" इति माध्यंदिनशाखायामपि देहात्मनोरभेदोपचारेण देहादेवोत्क्रान्तिः प्रतिषिद्धेत्यभ्युपगन्तव्यम् ।

"न तस्य प्राणा उत्क्रामन्ति" इति काण्वशाखावाक्ये तु 'तस्य' इति षष्ठ्युपस्थापित संबन्धसामान्यस्य विशेषाका-

ङ्क्षायामुपकरणोपकरणि भात्र संबन्धस्य "मनोमयः प्राणमय-श्चक्षुर्मयः श्रोत्रमयः" इत्यादिना पूर्वमुक्ततया स एव संबन्धोऽत्रापि स्वीकर्तुमुचितः, शीघ्रोपस्थितिकत्वात; न तु "न तस्मात् प्राणा उत्क्रामन्ति" इति माध्यंदिनशाखागत तस्मादिति पञ्चम्युपस्थाप्यमपादानत्वम्, अत्यन्तविलम्बितोपस्थितिकत्वात्। "न तस्य प्राणा उत्क्रामन्ति" इत्युत्क्रान्तिनिषेधापादानजिज्ञासायां तु चक्षुषो वा मूर्ध्नो वान्येभ्यो वा शरीरदेशेभ्य इत्यविद्वद्विषयपूर्ववाक्योक्ताः शरीरावयवा एवावधित्वेनोपतिष्ठन्ते। युक्तं चैतत; प्राप्ताया एव ह्युत्क्रान्तेः प्रतिषेधो न्याय्यः, न त्वप्राप्तायाः; शरीरावधिकोत्क्रान्तिरेव च प्राप्नोति, न शारीरावधिका, तस्या एव पूर्वमविद्वद्विषये उपदिष्टत्वात्। ततश्चाविदुष इव विदुषोऽपि प्राप्ता शरीरादुत्क्रान्तिरत्र प्रतिषिध्यत इति। शारीरादुत्क्रान्तिप्रतिषेधाङ्गीकारे त्वप्राप्तप्रतिषेधप्रसङ्गः।

अपि च "न तस्य प्राणा उत्क्रामन्ति" इतीदं वाक्यं शरीरादुत्क्रामतः शारीरात प्राणानामुत्क्रान्ति प्रतिषेधपरं यदि स्यात, तदा वाक्यासामञ्जस्यं च स्यात्। अविदुषः शरीरादुत्क्रान्ति सप्रपञ्चमभिधाय, "इति तु कामयमानः" इत्यविद्वत्कथां परिसमाप्य, "अथाकामयमानः" इति विद्वांसं प्रक्रम्य, तस्यापि यद्युत्क्रान्तिमेव प्रतिपादयेत्, तदा पृथगारम्भवैयर्थ्येन वाक्यमसमञ्जसं हि भवेत्; आर्तभागप्रश्नप्रतिवचनाविरोधश्च तदा दुर्निरोधः स्यात्। अतो विदुषः शरीरादुत्क्रान्ति प्रतिषेधपरमेवेदं वाक्यम्। अतो नास्ति विदुषः शरीराद-

त्क्रान्तिरिति सूत्रार्थं इति व्याख्यानम्—तदनादरणीयम्, सूत्राक्षराननुगुणत्वात् अनुपपन्नत्वाच्च ।

तथाहि—"स्पष्टो ह्येकेषाम्" इत्यत्र हिशब्देनैतत्सूत्रार्थस्य पूर्वसूत्रार्थोपपादकत्वमेव स्वरसतः प्रतीयते, नतत्प्रतिक्षेपकत्वम्। पूर्वसूत्रार्थप्रतिक्षेपविवक्षायां 'नेति'। 'तु' इति वा प्रयुज्येत, न तु तथा प्रयुक्तम् । अतो हिशब्दाननुगुणमुक्तव्याख्यानम् । एवम् 'एकेषाम्' इति सौत्रपदं शाखान्तरस्थ वाक्य एव स्वरसम्, न तच्छाखान्तर्गतप्रकरणान्तरस्थवाक्ये। शाखान्तरस्थवाक्यविवक्षास्थलएवास्मिन् शास्त्रे एकशब्दस्य प्रयोगदर्शनात् यथा—"ज्योतिरुपक्रमातु तथाह्यधीयत एके। ज्योतिषैकेषामसत्यन्ने । अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके । निर्मातारं चैके पुत्रादयश्च । अपि चैवमेके । कामकारेण चैके" । इत्यादिषु । अत्र हि सर्वत्र एक शब्दः शाखान्तरपर एव दृष्टः । तदेवमस्य सूत्रस्य पूर्वसूत्रार्थप्रतिक्षेपपरतया व्याख्यानं हिशब्दाननुगुणम् । आर्तभागप्रश्नप्रतिवचनवाक्यविषयतया व्याख्यानं चैकेषामिति पदाननुगुणम् । अतो निरुक्तव्याख्यानं सूत्राक्षराननुगुणमिति सिद्धम् ।

एवं "न तस्य प्राणा उत्क्रामन्ति" इति विद्वद्विषयमिदं वाक्यं किं विदुषः शरीरादुत्क्रान्तिप्रतिषेधपरम्, किं वा शारीरात् प्राणानामुत्क्रान्तिप्रतिषेधपरमिति संशये "नेति होवाच याज्ञवल्क्यः" इत्यार्तभागप्रश्नप्रतिवचनैकार्थ्येन शरीरादुत्क्रान्तिप्रतिषेधपरमिति सिद्धान्तकथनपरतयास्य सूत्रस्य

व्याख्यानमनुपपन्नं च । आर्तभागप्रश्नप्रतिवचनसंदर्भस्याविद्वद्विषयतायाः प्रागेव सुष्ठूपपादिततया विद्वद्विषयस्य प्रकृतविप्रतिपत्तिविषयवाक्यस्याविद्वद्विषयतद्वाक्यैकार्थ्यस्यानपेक्षितत्वात् । तस्यापि शारीरादुत्क्रान्तिप्रतिषेधपरत्वस्यावश्यवक्तव्यतायाः प्रागुपपादितत्वाच्च ।

अस्तु वा उदाहृतार्तभागप्रश्नप्रतिवचनयोर्विद्वद्विषयत्वमेव, तथापि "न तस्मात् प्राणा उत्क्रामन्ति" इति समानप्रकरणस्थस्पष्टार्थमाध्यंदिनशाखावाक्यैकार्थ्येन शारीरात् प्राणानामुत्क्रान्ति प्रतिषेधपरं "न तस्य प्राणा उत्क्रामन्ति इति विप्रतिपन्नवाक्यमिति वदन्तं पूर्वपक्षिणं प्रत्यार्तभागप्रश्नप्रतिवचनैकार्थ्येन शरीरादुत्क्रान्तिप्रतिषेधपरमेवेति सिद्धान्तकथनमनुपपन्नमेव । यथा उदाहृतार्तभागप्रश्नप्रतिवचने शरीरादुत्क्रान्तिप्रतिषेधः स्पष्टः; तथा पूर्वोपदर्शितमाध्यंदिनशाखावाक्ये शारीरादुत्क्रान्तिप्रतिषेधः स्पष्टः ।

इत्थं स्थिते आर्तभागप्रश्नप्रतिवचनैकार्थ्यमेवाश्रयणीयम्; न माध्यंदिनशाखावाक्यैकार्थ्यमित्यत्र नहि किंचिद्विनिगमकं पश्यामः । अथ परस्परविरुद्धयोरनयोर्विरोधप्रशमनाय दर्शितमाध्यंदिनशाखावाक्ये देहात्मनोरभेदोपचारेण देहादुत्क्रान्तिरेव प्रतिषिध्यत इत्यास्थेयमिति चेत्, उपदर्शितार्तभागप्रश्नप्रतिवचनवाक्य एव शरीरात्मनोरभेदोपचारेण शारीरादुत्क्रान्तिरेव प्रतिषिध्यत इति किं नाश्रीयते?; अतः पूर्वपक्षोपष्टम्भकयुक्तिर्यावन्न परिह्रियते, तावत् सिद्धान्तोऽयं न प्रतिष्ठितो भवतीत्यसंगतमेवेदं व्याख्यानम् ।

यत्तु "एष आत्मा निष्क्रामति चक्षुषोवा मूर्ध्नो वा अन्येभ्यो वा शरीरदेशेभ्यः" इत्यादिना अविदुषः शरीरादुत्क्रान्तिप्रकारं सविस्तरमभिधाय "इति तु कामयमानः" इत्यविद्वत्कथां परिसमाप्य "अथाकामयमानः" इति विद्वांसं पृथक् प्रस्तुत्य "न तस्य प्राणा उत्क्रामन्ति' इति यदीदं वाक्यं विदुषोऽप्युत्क्रान्तिमेव प्रापयेत्, तर्हि वाक्यमसमञ्जसमेव स्यात्, पृथगारम्भवैयर्थ्यादिति। तन्न, विद्वदविदुषोर्देहादुत्क्रान्तौ समानायामपि, एकस्य पुतरावृत्तिः, अन्यस्य नेति विशेषप्रतिपादनार्थतया पृथगारम्भस्य वैयर्थ्यानवकाशात्।

तत्र हि "प्राप्यान्तं कर्मणस्तस्य यत्किंचेह करोत्ययम्। तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे॥ इति तु कामयमानः" इत्यन्तेनाविद्वान् देषादुत्क्रम्य लोकान्तरं प्राप्य तत्र कर्मफलभोगावसाने पुनरिमं लोकं प्रत्यावर्तेत इत्यभिधाय "अथाकामयमानः" इति विद्वांसं प्रस्तुत्य "न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति" इति तस्य ब्रह्मप्राप्तिरभिहिता। ब्रह्मप्राप्तिर्ह्यपुनरावृत्तिलक्षणा, "ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते इत्यादिश्रुतेः। अतोऽविदुष इव विदुषोऽपि देहादुत्क्रान्तिप्रतिपादनेऽपि न वाक्यासाञ्जस्यप्रसङ्गः, प्रत्युत "न तस्य प्राणा उत्क्रामन्ति" इत्यत्र विदुषो देहादुत्क्रान्तिः प्रतिषिध्यत इति पक्ष एव, तदुत्तरवाक्ये तस्यैव ब्रह्मविदोऽर्चिरादिगतिप्रातिपादनात् पूर्वापराविरोधप्रसङ्गेन वाक्यस्य महदसामञ्जस्यं प्रसज्यते।

तथाहि—"अथाकामयमानः" इत्यादिना ब्राह्मणेन

प्रकान्तस्य ब्रह्मविदो "ब्रह्मैव सन् ब्रह्माप्येति" इति ब्रह्मप्राप्तिमुपदिश्य "तदेष श्लोको भवति" इत्युपक्रम्य,

"यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः ।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥"

इति "तद्यथाहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीतैवमेवेदं शरीरं शेते । अथायमशरीरोऽमृतः प्राणो ब्रह्मैव तेज एव सोऽहं भगवते सहस्रं ददामीति होवाच जनको वैदेहः ॥" इत्यभिधाय पुनरपि "तदेते श्लोकाभवन्ति" इत्युपक्रम्य

"अणुः पन्था विततः पुराणो
मां स्पृष्टोऽनुवित्तो मयैव ।
तेन धीरा अपियन्ति ब्रह्मविदः
स्वर्गं लोकमित ऊर्ध्वं विमुक्ताः ॥

तस्मिञ्छुक्लमुत नील माहुः
पिङ्गलं हरितं लोहितं च ।
एष पन्था ब्रह्मणाहानुवित्त-
स्तेनैति ब्रह्मवित्पुण्यकृत्तैजसश्च ॥"

इत्युपदिश्यते । अत्राणुः पन्था इत्यादेरयमर्थः—अणुः = दुर्विज्ञेयः, श्रुत्येकसमधिगम्य इत्यर्थः । विततः = उपनिषत्सु विस्तरेण प्रतिपादितः ; पुराणः = अनादिः, मां स्पृष्टः, छान्दोग्याष्ठमप्रपाठके—"तद्यथा महापथ आतत उभौ ग्रामौ गच्छतीमं चामुं चैवमेवैता आदित्यस्य रश्मय

उभौ लोकौ गच्छन्तीमं चामुं च अमुष्मादादित्यात् प्रतायन्ते ता आसु नाडीषु सृप्ता आभ्यो नाडीभ्यः प्रतायन्ते तेऽमुष्मिन्नादित्ये सृप्ताः" इत्युक्तप्रकारेणार्चिराद्युपक्रमभूतसुषुम्नानाडीद्वारा उपासकं मां स्पृष्टः = मया संबद्धः, मयैवानुवित्तः = मयैवानुसंहितः, योऽयं पन्था अर्चिरादिमार्गः ॥

तेनार्चिरादिमार्गेण धीरा निगृहीतेन्द्रियाः ब्रह्मविदः विमुक्ताश्चरमदेहान्मुक्ताः सन्तः इत उर्ध्वम् "अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतःपृष्ठेषु अनुत्तमेषूत्तमेषु लोकेषु" इत्याद्युक्तप्रकारेणास्मात् प्रकृतिमण्डलादूर्ध्वं स्वर्गं लोकं निरतिशयसुखात्मकं भगवल्लोकमपियान्ति प्राप्नुवन्ति इत्यर्थः। तस्मिन् शुक्लमीति। तस्मिन् अर्चिरादिमार्गे शुक्लनीलादिना नारूपविशिष्टमादित्यं सन्तमाहुः शास्त्रविदः। अत्र शुक्लं नीलमित्यादिना आदित्य उच्यते, "असौ वा आदित्यः पिङ्गल एष शुक्ल एष नील एष पीत एष लोहितः" इत्युपक्रम्य "तावदादित्यं गच्छत्येतद्वै लोकद्वारं विदुषां निरोधोऽविदुषाम्" इति छान्दोग्याष्टमप्रपाठके षष्ठखण्डे श्रवणात्।

अत्र च "शुक्लमुतनीलम्" इत्यादिना तदर्थस्य प्रत्यभिज्ञापनात्, एष एवंभूतः पन्था अर्चिरादिमार्गः ब्रह्मणा परेणानुवित्तः प्रापकतया संबद्धः। हेति प्रसिद्धौ। तेनार्चिरादि मार्गेण पुण्यकृत् जन्मान्तरसहस्रेषु कृतपुण्यकर्मा तद्बलेन ब्रह्मवित् ब्रह्मविद्यानिष्ठः तैजसः पञ्चाग्निविद्यानिष्ठश्च एति = गच्छति ब्रह्म प्राप्नोतीत्यर्थः। अत्र तैजसशब्देन पंचाग्निविद्यानिष्ठ एव गृह्यते ।

पंचाग्निविद्याप्रकरणे—"तद्य इत्थं विदुः येचेमेऽरण्ये श्रद्धां तप इत्युपासते तेऽर्चिषमाभिसंभवन्ति" इति श्रवणात्। अस्य मन्त्रद्वयस्य ज्ञानमार्गपरतया व्याख्यानं पुनरनुपादेयम्। ज्ञानमार्गपरत्वे द्वितीयमन्त्रे 'तस्मिन् शुक्लम्' इत्यादेरनन्वयप्रसङ्गात्, नहि तत्त्वज्ञाने शुक्लनीलादिवर्णानामन्वयः संभवति। 'मुमुक्षूणां विप्रतिपत्तिप्रदर्शनमेतत्। ततश्च तस्मिन् मोक्षमार्गे केचिन्मुमुक्षवो योगिनः शुक्लं शुक्लवर्णां नाडीमाहुः, अन्ये नीलवर्णां नाडीमित्यादिर्विप्रतिपत्तिप्रकारः पूर्वार्धेनोच्यते। अथवा शुक्लं नीलमित्यादिना आदित्यएवोच्यते स एव मोक्षद्वारमिति वा विप्रतिपत्तिः पूर्वार्धार्थः। सुषुम्नादयः शुद्धनीलपीतादिरूपा नाड्यो न मोक्षसाधनमार्गाः। तासां संसारप्रापकत्वात्। आदित्योऽपि न तथा, तस्यापि चतुर्मुखलोकप्रापकत्वात्। अपि तु योऽयं सर्वस्यैव कामस्य ज्ञानात् क्षये सति गमनानुपपत्तावत्रैव प्रत्यगात्मनि कार्यकारणानामेकीभावः, एष पन्था मोक्षमार्ग' इत्यर्थवर्णनं पुनरनुचितम्, पूर्वमन्त्रस्य तत्त्वज्ञानपरतया परैर्व्याख्याततया अस्मिन् मन्त्रे 'तस्मिन्' इत्यनेन तस्यैव ज्ञानरूपमार्गस्य परामर्ष्टव्यतया तत्र च नाडीना मादित्यस्य वा सद्भावस्य कैरप्यनभिधानेनासंभवेन च 'तस्मिन् शुक्लम्' इत्यादेरनन्वयस्य दुष्परिहरत्वात्।

अतः 'तस्मिन् शुक्लम्' इत्यादेरन्वयोपपत्तये पूर्वमन्त्रे अणुः पन्थाः इत्यादिना अर्चिरादिमार्गः प्रतिपाद्यत इत्यास्थेयम्। तथासत्यर्चिरादिमार्गे आदित्यावस्थानस्य बहुश्रुतिस्मृ-

तिसिद्धतया "तस्मिञ्छुक्लमुत नीलम्" इत्यत्र शुक्लं नीलमित्यादिना पूर्वोक्तरीत्या आदित्योपस्थापनसंभवाच्चान्वयानुपपत्त्यनवकाशात् । इत्थं च "अणुः पन्थाः" इत्यादिना ब्रह्मविदामर्चिरादिमार्गेण गतिं प्रस्तुत्य 'तस्मिन् शुक्लम्' इत्यादिना अर्चिरादिमार्गस्यादित्याधिष्ठितत्वरूपं चिह्नमभिधाय "एष पन्थाः" इत्यादिना ब्रह्मविदामर्चिरादिना गतिः पूर्वप्रस्तुतोपसंह्रियत इति सुसंगतमेतत् ।

एतेन "तस्मिञ्छुक्लम्" इत्यादिना पूर्वार्धेन सुषुम्ना नाडी आदित्यो वा मोक्षद्वारमिति वादिनां विप्रतिपत्तिं प्रदर्श्य "एष पन्थाः" इत्युत्तरार्धेन सुषुम्ना न मोक्षसाधनम्, तस्याः संसारप्रापकत्वात्; आदित्योऽपि न तथा, तस्य चतुर्मुखलोकप्रापकत्वात्; अपि तु ज्ञानमार्ग एव मोक्षसाधनमिति सिद्धान्त उच्यत इत्यर्थवर्णनं निरस्तम्, "अणुः पन्थाः" इत्यादिना अर्चिरादिमार्गस्यैव प्रक्रान्ततायाः "एष पन्थाः" इत्यादिना तस्यैव निगमितत्वस्य च सुष्ठूपपादितत्वात् । आदित्याधिष्ठितस्य मार्गस्यार्चिरादिरूपतया तस्य चापुनरावृत्तिलक्षणमोक्षमार्गताया बहुश्रुतिस्मृतिसिद्धत्वेनादित्याधिष्ठितमार्गस्य मोक्षमार्गतावादिपक्षस्य पूर्वपक्षतावर्णनस्यात्यन्तानुचितत्वाच्च ।

श्रूयते हि अर्चिरादिगतेरपुनरावृत्तिहेतुत्वं बह्वीषु श्रुतिस्मृतिषु; यथा छान्दोग्ये चतुर्थप्रपाठके पञ्चदशखण्डे — "अर्चिषमेवाभिसंभवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षडुदङ्ङेति मासांस्तान् मासेभ्यः संवत्सरं संव-

त्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयत्येष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानव मावर्तं नावर्तन्ते" इति ।

बृहदारण्यके अष्टमाध्याये द्वितीयब्राह्मणे—"तेऽर्चिषमभिसंभवन्ति" इत्यारभ्य "पुरुषोऽमानव एत्य ब्रह्मलोकान् गमयति, तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति, तेषां न पुनरावृत्तिः" इति । प्रश्नोपनिषदि प्रथमप्रश्ने —"अथोत्तरेण तपसा ब्रह्मचर्येण श्रद्धया विद्ययात्मानमान्विष्यादित्यमभिजयन्ते, एतद्वै प्राणानामायतनमेतदमृतमेतदभयमेतत् परायणमेतस्मान्न पुनरावर्तन्ते इत्येष निरोधः" इति । तपसा=कायक्लेशेन, ब्रह्मचर्येण=इन्द्रियजयेन, श्रद्धया=आस्तिक्यबुद्ध्या, विद्यया=ज्ञानयोगेन, आत्मानं=परमात्मानमान्विष्योपास्य उत्तरेण=देवयानेन पथा, आदित्यमर्चिरादिमार्गस्थमभिजयन्ते प्राप्नुवन्ति । एतत् आत्मानमान्विष्येति प्रस्तुत आत्मा; आयतनमित्याद्यनुसारादेतदिति नपुंसकनिर्देशः, प्राणानां प्राणभृतामायतनमाधारभूतः अमृतं=नित्यनिर्विकारः परायणं परमप्राप्यभूतः । एतस्मात् परमात्मनः; ल्यब्लोपे पञ्चमी; अर्चिरादिमार्गेण परमात्मानं प्राप्य न निवर्तन्ते इति श्रुत्यर्थः । भगवद्गीतासु—

"शुक्लकृष्णे गतीह्येते जगतः शाश्वते मते ।
एकया यात्यनावृत्ति मन्ययावर्तते पुनः ॥"

इति । अतः "अणुः पन्थाः" इत्यादिमन्त्रद्वयेन पूर्वप्रस्तुतस्याधिकारिणोऽर्चिरादिगतिरेव विधीयते । अतश्च "न तस्य

प्राणा उत्क्रामन्ति" इति पूर्ववाक्यस्य विदुषः शरीरात् प्राणानामुत्क्रान्तिप्रतिषेधपरत्वे तस्यार्चिरादिगातिप्रतिपादक-दर्शितोत्तरमन्त्रद्वयविरोधप्रसङ्गो दुष्परिहरः । "न तस्य प्राणा उत्क्रामन्ति" इत्यस्य विदुषः शरीरादुत्क्रान्तिप्रतिषेध-परत्वे न केवलमुदाहृतोत्तरमन्त्रद्वयविरोध एव, अपि तु ब्रह्म-विद एवोत्क्रान्ति लोकान्तरगतिप्रतिपादक बहुतरश्रुत्यन्तर-विरोधश्च; तथाहि कठवल्लीषु षष्ठवल्ल्याम्

"शतं चैका च हृदयस्य नाड्य-
स्तासां मूर्धानमभि निःसृतैका ।
तयोर्ध्वमायन्नमृतत्वमेति
विष्वङ्ङन्या उत्क्रमणे भवन्ति ॥"

इति । प्रश्नोपनिषदि पञ्चमप्रश्ने—"यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत सतेजसि सूर्ये संपन्नो यथा पादोदरस्त्वचा विनिर्मुच्यते एवं हैव स पाप्मना विनिर्मुक्तः ससामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जी-वघनात् परात् परं पुरिशयं पुरुषमीक्षते" इति । मुण्डकोप-निषदि प्रथममुण्डके

"तपः श्रद्धे ये ह्युपवसन्त्यरण्ये
शान्ता विद्वांसो भैक्षचर्यां चरन्तः ।
सूर्यद्वारेण ते विरजाः प्रयान्ति
यत्रामृतः स पुरुषो ह्यव्ययात्मा ॥" इति

तत्रैव तृतीयमुण्डके प्रथमखण्डे—

"सत्यमेव जयते नानृतं
सत्येन पन्था विततो देवयानः।
तेनाक्रमन्त्यृष यो ह्याप्तकामा
यत्र तत्सत्यस्य परमं निधानम्॥"

इति। तैत्तिरीयोपनिषदि शिक्षावल्ल्याम्—"अन्तरेण तालुके। य एष स्तन इवावलम्बते। सेन्द्रयोनिः। यत्रासौके शान्तो विवर्तते। व्यपोह्य शीर्षकपाले। भूरित्यग्नौ प्रतितिष्ठति। इत्यादि। तत्रैवानन्दवल्ल्याम्—"उताविद्वानमुंलोकं प्रेत्य। कश्चन गच्छति। आहो विद्वानमुं लोकं प्रेत्य। कश्चित् समश्नुताउ" इति प्रश्नस्य प्रतिवचनम्—"सय एवं वित्। अस्माल्लोकात् प्रेत्य। एतमन्नमयमात्मानमुपसंक्रामति" इत्यारभ्य "एतमानन्दमयमात्मानमुपसंक्रामति" इति। भृगुवल्ल्याम्—"सय एवं वित्। अस्माल्लोकात् प्रेत्य। एतमन्नमयमात्मानमुपसंक्रम्य" इत्यारभ्य "एतमानन्दमयमात्मानमुपसंक्रम्य। इमान् लोकान् कामान्नी कामरूप्यनुसंचरन्। एतत् सामगायन्नास्ते" इति।

छान्दोग्ये अष्टमप्रपाठके षष्ठखण्डे—"अथयत्रैतस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्वमाक्रमते स ओमिति वाहोद्वामीयते स यावत् क्षिप्येन्मनस्तावदादित्यं गच्छत्येतद्वै खलु लोकद्वारं विदुषां प्रपदनं निरोधोऽविदुषाम्। तदेष श्लोकः—शतं चैकाच हृदयस्य नाड्यः" इत्यादि। तत्रैव द्वादशखण्डे—"एष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" इति।

ऐतरेयोपनिषदि तृतीयाध्याये —"सय एवं विद्वानमुष्माच्छरीरभेदादूर्ध्वं उत्क्रम्यामुष्मिन् स्वर्गे लोके सर्वान् कामानाप्त्वामृतः समभवत् समभवत्" इति। एतासु हि श्रुतिषु ब्रह्मविदोऽपि देहादुत्क्रान्तिर्लोकान्तरप्राप्तिश्च प्रतिपादिता। एवमर्चिरादिगतिप्रतिपादकश्रुतिष्वपि तत्प्रतिपादनं द्रष्टव्यम्। तदेवमुदाहृतबहुतरश्रुत्यन्तरविरोधादुत्तरमन्त्राविरोधाच्च "न तस्य प्राणा उत्क्रामन्ति इत्यस्य शरीरादुत्क्रान्तिप्रतिषेधपरत्वपक्ष एव वाक्यस्य महत्तरासामञ्जस्यप्रसङ्गः। अतो न तस्य-प्राणा उत्क्रामन्ति इत्यस्य शारीरात् प्राणानामुत्क्रान्तिप्रतिषेधपरत्वपक्ष एव युक्तः। नचैवमप्राप्तप्रतिषेधप्रसङ्गः, न्यायप्राप्तस्य प्रतिषेधात्।

तथाहि—"अथाकामयमानः" इत्यादिना प्रक्रान्तस्य ब्रह्मविदो ब्रह्मप्राप्तिं तदुपयोगिनीमर्चिरादिगतिं च प्रतिपिपादयिषुः भगवती श्रुतिरर्चिरादिगतेश्चन्द्रमः संवादादिगर्भायाः शरीरेन्द्रियादिसाध्यतया तत्संबन्धस्य च कर्मनिमित्ततया विदुषश्चरमशरीरवियोगदशायामेव कर्मणां निःशेषनिवृत्तेः सांपरायाधिकरणन्यायासिद्धतया निमित्तापाये नैमित्तिकापायन्यायेन तदानीमेव तस्य शरीरेन्द्रियादिसंबन्धनिवृत्तेरनिवार्यतया ब्रह्मविदः कथं शरीरेन्द्रियादिसंबन्ध साध्यार्चिरादिगतिरित्याशङ्कामपनिनीषुर्विद्यामाहात्म्यात् विदुषः सकाशात् प्राणा न विश्लिष्यन्तीति प्रथममेव प्रतिपादयति। अनन्तरं च "ब्रह्मैव सन् ब्रह्माप्येति" इति तस्य ब्रह्मप्राप्तिमभिधाय "अणुः पन्थाः" इत्यादिना तदुपयोगिनीमर्चिरादिकां गति-

माह। अतो नाप्राप्तप्रतिषेधप्रसङ्गः। अतो "न तस्य प्राणा उत्क्रामन्ति" इत्यस्य शरीरादुत्क्रान्तस्यापि विदुषः प्राणास्तस्मान्न विश्लिष्यन्ति, अपि तु तेनैव सह गच्छन्तीत्येवार्थः।

इत्थं च "यदा सर्वे प्रमुच्यन्ते" इत्युत्तरमन्त्रे "अत्र ब्रह्म समश्नुते" इत्यनेन ब्रह्मविदोऽत्रैव ब्रह्मप्राप्तिर्नोपादिश्यते, अपि तु उपासनकालिकब्रह्मानुभव एव। "अथमर्त्योऽमृतो भवति" इत्यनेन चोत्तरपूर्वाघाश्लेषविनाशरूपममृतत्वमभिधीयते, न मोक्षः। "तद्यथाहिनिर्ल्वयनी" इत्यादितदुत्तरवाक्येऽप्युपासननिष्पत्तिकालिक एव कश्चिदतिशयो विवक्षितः।

तदयमर्थः—यथा अहिनिर्ल्वयनी = सर्पनिर्मोकः वल्मीके प्रत्यस्ता = सर्पेण विसृष्टा; अत एव मृता; निष्प्राणापि, दूरे पश्यतां सर्पवदवभासमाना शयीत, एवमेव ब्रह्मविदः इदं शरीरं तेन परित्यक्ताभिमानमपि पश्यतां ब्रह्मविच्छरीरतयावभासमानं शेते। अथ उपासननिष्पत्त्यनन्तरमयं ब्रह्मवित् अमृतोऽप्यशरीरः मरणात् प्रागपि शरीराभिमानविरहात् शरीररहिततुल्य एव। प्राणः प्राणभृदपि ब्रह्मैव ब्रह्मतुल्य एव = आविर्भूतब्रह्मगुणाष्टकतुल्य एव, तेज एव = निवृत्ताज्ञान एवेति। तदेवं "न तस्य प्राणा उत्क्रामन्ति" इत्यस्य आर्तभागप्रश्नप्रतिवचनैकार्थ्येन शरीरादुत्क्रान्ति प्रतिषेधपरत्वपक्षे बहुतरदोषप्रसङ्गात् "न तस्मात् प्राणा उत्क्रामन्ति" इति समानप्रकरणस्थ वाक्यान्तरैकार्थ्येन शारीरादुत्क्रान्ति प्रतिषेधपरत्वपक्षे दोषलेशासंस्पर्शाच्च शरीरादुत्क्रान्ति प्रतिषेध-

पक्षस्य पूर्वपक्षत्वं शारीरादुत्क्रान्तिप्रतिषेधपक्षस्य सिद्धान्तपक्षत्वमेव च युक्तम् । अतस्तयोर्व्यत्ययमाश्रित्य "स्पष्टो ह्येकेषाम्" इति सूत्रव्याख्यानमनुपपन्नमेवेति सिद्धम् ।

अपि च "समानाचासृत्युपक्रमादमृतत्वं चानुपोष्य" इति पूर्वसूत्रे सूत्रकारैरेव ब्रह्मविदस्तदन्येषां च नाडीप्रवेशात् प्रागुत्क्रान्ति रविशिष्टेति सिद्धान्तितत्वादस्मिन् सूत्रे ब्रह्मविद उत्क्रान्तिर्नास्तीति सिद्धान्तकरणे विप्रतिषिद्धार्थकथनेन सूत्रकाराणामुन्मत्तत्वप्रसङ्गादप्युक्तव्याख्यानमनुपपन्नम् । न च पूर्वसूत्रे सगुणब्रह्मविद्यानिष्ठस्योत्क्रान्तिः सिद्धान्तिता, इहतु निर्गुणब्रह्मविद्यानिष्ठस्योत्क्रान्त्यभावः सिद्धान्त्यत इति न विप्रतिषिद्धार्थकथनप्रसङ्ग इति वाच्यम्, सगुणब्रह्मविद्या, निर्गुणब्रह्मविद्येत्येवं ब्रह्मविद्याद्वैविध्यस्य कुत्राप्यनुपलम्भात् । प्रत्युत ब्रह्ममीमांसातृतीयाध्याये गुणोपसंहारपादे आनन्दाद्यधिकरणे—"आनन्दादयः प्रधानस्य, इतरेत्वर्थसामान्यात्" इति सूत्रद्वयेन सर्वास्वपि ब्रह्मविद्यासु सत्यत्वज्ञानत्वानन्तत्वानन्दत्वानामनुसंधेयतायाः सिद्धान्तितत्वेन सर्वासामेव ब्रह्मविद्यानां सगुणब्रह्मविषयतायाा एव सिद्धेः ।

तत्र हि "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादौ श्रुताः सत्यत्वज्ञानत्वादयो गुणाः सर्वासु ब्रह्मविद्यासूपसंहर्तव्या नवेति संशये एकस्यां विद्यायां श्रुतानां विद्यान्तरे उपसंहारे मानाभावान्नोपसंहर्तव्या इति पूर्वपक्षे प्राप्ते सिद्धान्त उच्यते— "आनन्दादयः प्रधानस्य" इति । "सर्वाभेदादन्यत्रेमे" इति पूर्वसूत्रादभेदादित्यनुषज्यते । ततश्च प्रधानस्य गुणिनो ब्रह्मणः

अभेदादैक्यादानन्दादयो गुणाः सर्वासु ब्रह्मविद्यासूपसंहर्तव्याः। सर्वासु ब्रह्मविद्यास्वनुसंधेयस्य ब्रह्मण ऐक्यादानन्दादयो ब्रह्मगुणाः सर्वास्वनुसंधेया इत्यर्थः।

नन्वेवं संयद्वामत्वादीनामपि ब्रह्मगुणत्वाविशेषात् तेषामपि सर्वत्रोपसंहर्तव्यता स्यात्। न चेष्टापत्तिः, ब्रह्मगुणानामानन्त्येन सर्वोपसंहारस्याशक्यत्वादित्याशङ्कायामाह— "इतरे त्वर्थसामान्यात्" इति। संयद्वामत्वादयो गुणा ये यत्र श्रुतास्ते तत्रैव व्यवतिष्ठन्ते। इतरे आनन्दादयस्तु सर्वासु ब्रह्मविद्यास्वनुवर्तन्ते; कुतः! अर्थसामान्यात्=अर्थेन धर्मिस्वरूपेण सामान्यात्=समानत्वात्, धर्मिप्रतीतिदशायां धर्मिवन्नियमेन प्रतीयमानत्वादित्यर्थः।

अयं भावः—स्वरूपनिरूपकधर्माः, निरूपितस्वरूपविशेषणधर्माश्चेति द्विविधा धर्माः। यैर्धर्मिस्वरूपे इतरजातीयत्वशङ्का व्यावर्त्यते, ते स्वरूपनिरूपकधर्माः; यथा गवादेः सास्नादयः। अतथाविधा धर्मा निरूपितस्वरूपविशेषणधर्माः; यथा गवादेः शुक्लत्वादयः। प्रकृते सत्यत्वज्ञानत्वादिभिर्ब्रह्मणोऽचिज्जीवजातीयत्वशङ्काव्यावर्तनात् ते ब्रह्मणः स्वरूपनिरूपकधर्माः। अतस्ते सर्वविद्यास्वनुवर्तन्ते। अन्ये तु संयद्वामत्वादयोऽतथाविधत्वात्तत्तद्विद्यासु व्यवतिष्ठन्त इति। इदं च सूत्रमित्थमेव व्याख्यातं परैरपि।

यत्तु आनन्दादयः शब्दाः सर्वासु परविद्यासूपसंहर्तव्या इति निरुक्तसूत्रार्थः; आनन्दः सत्यं ज्ञानमनन्तं ब्रह्मेति पदजातं समानाधिकरणं सर्वासु शाखासूपसंहर्तव्य मित्या-

शयः । न च तदुपसंहारः किमर्थ इति शङ्क्यम्, सत्यादिपदैर्लक्षणया स्वरूपमात्रप्रतिपत्त्यर्थत्वात् तदुपसंहारस्येति परकीयभाष्यव्याख्यातृभिरुक्तम्; तदयुक्तम्, पूर्वोत्तराधिकरणेषु गुणोपसंहारस्यैव निरूप्यमाणतया अत्रापि स्वरसतस्तस्यैव प्रतीयमानतया च तत्परत्वपरित्यागे मानाभावात् । अनध्याहारेण योजनासंभवे समानाधिकरणाः शब्दा इति पदद्वयाध्याहारेण योजनाया अन्याय्यत्वाच्च । समानाधिकरणवाक्येऽपि तत्तत्पदप्रवृत्तिनिमित्तापरित्यागेनैव वाक्यार्थवर्णनावश्यकताया आकरे बहुधा व्यवस्थापितत्वेन समानाधिकरणा इत्यध्याहारेऽप्यभिमतार्थसिद्ध्यसंभवाच्च । प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे इत्यनन्तरसूत्रे प्रियशिरस्त्वादि धर्माणामप्युपसंहार्यताप्रसक्तिमाशङ्क्य निराकृतत्वेन पूर्वसूत्रेऽपि धर्मविशेषाणामेवोपसंहारव्यवस्थापनं विवक्षितमित्यवगमाच्चेति दिक् ।

तत्सिद्धमानन्दाद्यधिकरणे आनन्दादिगुणानामेवोपसंहारः सूत्रकारैर्विवक्षित इति । अतः सर्वा अपि ब्रह्मविद्याः सगुणब्रह्मविषया एवेत्येव सूत्रकाराशयः । अपि च "समाना चासृत्युपक्रमात्" इति सूत्रेण द्वयोरधिकारिणोर्नाडीप्रवेशात् प्रागुत्क्रान्तिराविशिष्टेति प्रतिपादिते कौतौ द्वावधिकारिणाविति जिज्ञासायाम् "तदोकोग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात् तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया" इत्युत्तरसूत्रे ब्रह्मविद्यानिष्ठस्य नाडीप्रवेशदशायां विशेषाभिधानेन ब्रह्मविद्यानिष्ठस्तादितरश्च तावधिकारिणावित्येतावन्मात्रं प्रतीयते । न तु ततोऽधिकम् ।

इत्थं स्थिते सगुणब्रह्मविद्यानिष्ठस्यैव तत्रोत्क्रान्तिरभिहितेति कथमवगतम्? "स्पष्टो ह्येकेषाम्" इत्युत्तरसूत्रे निर्गुणब्रह्मविद उत्क्रान्तिप्रतिषेधादवगतमिति चेत्, न, अन्योन्याश्रयणात्। "स्पष्टो ह्येकेषाम्" इत्यस्य निर्गुणब्रह्मविद उत्क्रान्तिप्रतिषेधपरत्वे सिद्धे "समानाच" इत्यादि सूत्रस्य सगुणब्रह्मवित्परतया संकोचसिद्धिः। अन्यथा संकोचकाभावेन ब्रह्मवित्सामान्यपरताया दुर्वारत्वात्। "समानाच" इत्यादिसूत्रस्य सगुणब्रह्मवित्परत्वे सिद्धे "स्पष्टो ह्येकेषाम्" इति सूत्रस्य निर्गुणब्रह्मविद उत्क्रान्तिप्रतिषेधपरत्वसिद्धिः, अन्यथा पूर्वसूत्रविरोधेन तत्परत्वासिद्धेरिति।

अथोच्येत—गुणोपसंहारपादे गतेरर्थवत्त्वमुभयथान्यथा हि विरोधः, उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत्" इति सूत्रद्वयेन निर्गुणब्रह्मविद्विषयेऽर्चिरादिगतेः प्रयोजनविरहेण तस्य तदभावव्यवस्थापनात् "समाना च" इत्यादिसूत्रोक्ता गत्यर्था उत्क्रान्तिः सगुणब्रह्मविद्विषयेत्यवगम्यते।

तथाहि—सर्वासु ब्रह्मविद्यास्वर्चिरादिगतिरस्ति नवेति संशये कासुचिद्ब्रह्मविद्यास्वार्चिरादिगतेः श्रुतत्वेन ब्रह्मविद्यात्वाविशेषात् सर्वासु ब्रह्मविद्यासु अस्त्यार्चिरादिगतिरिति पूर्वपक्षे प्राप्ते सिद्धान्त उच्यते—"गतेरर्थवत्त्वम्" इत्यादिना सूत्रद्वयेन। कासुचिद्विद्यास्वर्चिरादिगतिर्भवति कासुचिन्नेत्येवमुभयथा विभागे सति गतेः अर्चिरादिनागमनस्यार्थवत्त्वं प्रयोजनवत्त्वं संभवति। अन्यथा गतेः सार्वत्रिकत्वे विरोधः

"तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति" इति श्रुतिविरोध इति प्रथमसूत्रार्थः ।

अयं भावः—"तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति" इति श्रुतिर्विदुषः परमसाम्यरूपफलप्राप्तिं दर्शयति । परमसाम्यं च ब्रह्मभावः । तत्प्राप्तिश्च न देशान्तरगमनसापेक्षा, स्वाभाविकस्वरूपत्वात् तस्य । परं त्वारब्धाशेषकर्मांशक्षपणमेव तत्रापेक्षितम् । अतो न तत्रार्चिरादिगतेरुपयोगः । ततश्चार्चिरादिगतेः सार्वत्रिकत्वे तथाविधश्रुतिविरोध इति । सगुणब्रह्मविद्यासु परं कुतस्तदपेक्षेत्यत्राह—"उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत्" इति । सगुणविद्यासु तु अर्चिरादिर्मार्ग उपपन्नः; तत् देशान्तरगमनं लक्षणं कारणं यस्य तल्लक्षणः देशान्तरगमनसाध्यो योऽर्थस्तस्य तत्रोपलब्धेः लोकवदिति सूत्रार्थः । पर्यङ्कविद्यादिषु पर्यङ्कारोहणादिरूपं फलमुपदिश्यते । तत्प्राप्तिश्च देशान्तरगमनसापेक्षेति तास्वर्चिरादिगतेरुपयोगः, न निर्गुणविद्यासु । न हि ग्रामप्राप्तावपेक्षितः पन्था आरोग्यप्राप्तावपेक्ष्यते तद्वदिति सूत्राशय इति । नैतद्युक्तम्, सूत्राक्षराननुगुणत्वादनुपपन्नत्वाच्च "गतेरर्थवत्त्वम्" इति सूत्रस्योक्तार्थपरत्वायोगात् ।

तथाहि—गतेरर्थवत्त्वमुभयथा इत्युक्ते गतेः प्रयोजनवत्तायाः प्रकारद्वयमुच्यत इति स्वरसतः प्रतीयते, उक्तयोजनायां सगुणविद्यासु देशव्यवहितफलप्राप्त्यर्थतया गतेः प्रयोजनवत्त्वमित्ययमेकः प्रकारोऽस्तु प्रयोजनवत्तायाः । निर्गुणविद्यासु फलस्य देशव्यवधानविरहेण गतेर्निष्प्रयोजनत्व-

मिति तु न प्रयोजनवत्तायाः प्रकारान्तरम्। अतः प्रकार-द्वयालाभेन सूत्राक्षराननुगुणोऽयमर्थः, अनुपपन्नश्च। "गते-रर्थवत्त्वमुभयथान्यथा हि विरोधः" इत्यत्र अन्यथा अर्चि-रादिगतेः सार्वत्रिकत्वे "तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति" इति श्रुतिविरोधः, निरञ्जनस्य निर्धूतानिखिलोपाधेरात्मनो गन्तृत्वायोगात्, परब्रह्मणा ऐक्य-रूपस्य परमसाम्यस्य देशान्तरगमननिरपेक्षत्वाच्च, विदुषस्तथा-विधफलप्रातिपादकनिरुक्तश्रुतिविरोध इति ह्यर्थो वर्णितः परैः। तत्र श्रुतिप्रतिपाद्यं साम्यं नैक्यरूपम्, साम्यशब्दस्यैक्ये प्रसिद्ध्यभावात्। समशब्दस्य हि 'समकालिकः' इत्यादौ क्वचि-दैक्यार्थे प्रयोगसत्त्वेऽपि न तत्र प्रसिद्धिः। अपि तु सादृश्य एवेत्यविवादम्। अतः प्रकृतसाम्य शब्दस्य प्रसिद्धार्थ परित्यागे मानाभावेन सादृश्यमेवार्थ इति युक्तं प्रतिपत्तुम्। अपि चास्य मन्त्रस्य पूर्वापरमन्त्रेषु जीवब्रह्मणोर्भेदस्यैव प्रपञ्चि-तत्वेन तन्मध्यपतितेऽस्मिन् मन्त्रे साम्यशब्दस्यैक्यार्थकत्वं पूर्वोत्तरसंदर्भविरुद्धम्।

तथाहि—अयं मन्त्रो मुण्डकोपनिषदि तृतीयमुण्डके प्रथमखण्डे—

"द्वा सुपर्णा सयुजा सखाया
समानं वृक्षं परिषस्वजाते।
तयोरन्यः पिप्पलं स्वाद्वत्ति
अनश्नन्नन्यो अभिचाकशीति॥

समाने वृक्षे पुरुषो निमग्नः
अनीशया शोचति मुह्यमानः ।
जुष्टं यदा पश्यत्यन्यमीशमस्य
महिमानमिति वीतशोकः ” ॥

इति मन्त्रयोरनन्तरं पठ्यते । तत्र प्रथममन्त्रस्यायमर्थः— “द्वा सुपर्णा सयुजा सखाया” इत्यत्र औविभक्ते राकारश्छान्दसः । सयुजौ=अपहतपाप्मत्वादि समानगुणयुक्तौ, सखायौ =सहचरौ, द्वौ सुपर्णौ=पक्षिणौ ; अत्र जीवात्मपरमात्मनोः पक्षित्वेन निगीर्याध्यवसानं बोध्यम् ; ममानम्=उभयसाधारणं, वृक्षं=वृक्षसदृशं शरीरम् ; अत्रापि निगीर्याध्यवसानम् ; परिषस्वजाते=आश्रित्य वर्तेते । तयोः=जीवात्मपरमात्मनोः, अन्यः=एको जीवः, पिप्पलं=कर्मफलं, सुखदुःखरूपं, स्वादु यथातथा, अत्ति=भुङ्क्ते । अन्यस्तु=परमात्मा, अनश्नन्=सत्यपि शरीरसंबन्धे सुखदुःखरूपं तत्संबन्धप्रयुक्तं कर्मफलमननुभवन्, आभिचाकशीति=दीप्यमान एव वर्तये, सर्वदा असंकुचितज्ञान एवास्त इत्यर्थः ।

द्वितीयमन्त्रस्य तु पुरुषो जीवः, अनीशया=अस्वतन्त्रया, प्रकृत्येत्यर्थः । तया निमित्तभूतया मुह्यमानः=देहात्मभ्रमस्वतन्त्रात्मभ्रमलक्षणमोहं प्राप्नुवन्, समाने=उभयसाधारणे, वृक्षे=शरीरे, निमग्नः सन्=‘स्थूलोऽहं कृशोऽहम्’ इत्यादि तादात्म्यबुद्ध्या पांसूदकवत् तदेकतामापन्नः सन्, शोचति=तत्संसर्गकृतान्युच्चावचदुःखान्यनुभवति । असावीदृशः पुरुषो यदा अन्यं=स्वस्मादत्यन्तविलक्षणं जुष्टं=स्वानुष्ठि-

तोपासनेन स्वस्मिन् निरतिशयप्रीति युक्तमीशं=सर्वस्य नियन्तारं, परमात्मानम् इति एवंविधम्; अत्र इति शब्दो बुद्धिस्थप्रकारवचनः; अस्य=परमात्मनो महिमानं=निखिलजगन्नियन्तृत्वलक्षणमाहात्म्यं च; अत्र द्रष्टव्यद्वयोक्त्या चशब्दोऽप्रयुक्तोऽप्यर्थसिद्धः; पश्यति=साक्षात्करोति, अनवरतभावनया तद्विषयदर्शनसमानाकारज्ञानवान् भवतीत्यर्थः। तदेत्यध्याहार्यम्; तदा वीतशोको भवतीत्यर्थः।

अत्र 'वीतशोकः' इत्यनेन "एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकोविजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः" इति प्रजापतिविद्योक्तगुणाष्टकमध्यगतं वीतशोकत्वं स्मार्यते। तेन तत्सहचरिता अपहतपाप्मत्वादयो गुणा आक्षिप्यन्ते। तेन "पराभिध्यानात्तु तिरोहितं ततोह्यस्य बन्धविपर्ययौ" इति सूत्रोक्तरीत्या अनादिना प्रकृतिसंसर्गेण तिरोहितापहतपाप्मत्वादि गुणाष्टकरूपस्वस्वरूपोऽयं जीवो निरतिशयमहिमाविशिष्टपरमेश्वर निदिध्यासनजनित परमेश्वरप्रीत्या आविर्भूतगुणाष्टको भवतीत्यर्थः फलितः।

अत्र प्रथममन्त्रः शारीरकमीमांसा प्रथमाध्याय तृतीयपादे द्युभ्वाद्यधिकरणे "स्थित्यदनाभ्यां च" इति सूत्रेण जीवेश्वरयोः कर्मफलभोक्तृत्व तदभोक्तृत्वलक्षणवैलक्षण्य प्रतिपादनपरतया व्याख्यातः। स्थितिः=कर्मफलभोक्तृत्वं विना केवलं दीप्यमानतया शरीरेऽवस्थानम्; अदनं=कर्मफलभोक्तृत्वम्; ताभ्यामुक्तमन्त्रे अभिधीयमानाभ्यां द्युभ्वाद्यायतनम् आत्मा परमात्मेति निर्णीयते इति सूत्रार्थः।

अयं भावः—"द्वा सुपर्णा" इति मन्त्रे द्वयोरेकस्मिन् शरीरेऽवस्थानेऽप्येकः कर्मफलं सुखदुःखादिकमनुभवति; अन्यस्तु तदननुभवन् सर्वदा दीप्यमान एव वर्तत इत्यभिधीयते। तत्र कर्मफलमनुभवन् जीवः, तदननुभवन् दीप्यमानः परमात्मा। स एव पूर्वप्रकृतो द्युभ्वाद्यायतनमात्मा भवितुमर्हति, तत्रैव पूर्वमन्त्रोक्त सर्वज्ञत्वादि धर्माणामन्वययोग्यत्वात् इति।

द्वितीयोऽपि मन्त्रस्तयोर्भेदक धर्मरूपोपपत्ति प्रदर्शनपूर्वकं भेदप्रदर्शनपरतया तस्मिन्नेवाधिकरणे "भेदव्यपदेशाच्च" इति सूत्रेण व्याख्यातः। सूत्रे भेदशब्दः भेदकधर्मं भेदं च तन्त्रेणाह। ततश्च "समाने वृक्षे पुरुषो निमग्नः" इति प्राकरणिकमन्त्रे भेदक धर्मप्रदर्शनपूर्वकं भेदस्य व्यपदिश्यमानत्वादपि द्युभ्वाद्यायतनं परमात्मेति निश्चीयत इति सूत्रार्थः।

अयं भावः— उदाहृतमन्त्रः "जुष्टं यदा पश्यत्यन्यमीशम्" इतीशत्वेशितव्यत्वादिरूपभेदक धर्मप्रदर्शनपूर्वकं जीवेश्वरयोर्भेदं प्रदर्शयन् जीवं शोकनिवृत्त्यर्थदृष्टिकर्तारं ईश्वरं च तत्कर्तृकतथाविधदृष्टिविषयं व्यपदिशति। तत्र शोकनिवृत्तये दृश्यत्वेनोक्तः परमात्मैव "तमेवैकं जानथात्मानम्" इति शोकनिवृत्तये ज्ञातव्यत्वेनोक्तो द्युभ्वाद्यायतनमात्मा भवितुमर्हतीति। अत उक्तमन्त्रयोः सोपपत्तिकं भेदः प्रदर्शित इति सिद्धम्।

तथा तस्मिन्नेव तृतीयमुण्डके द्वितीयखण्डे—

"यथा नद्यः स्यन्दमानाः समुद्रे
अस्तं गच्छन्ति नामरूपे विहाय ।
तथा विद्वान्नामरूपाद्विमुक्तः
परात् परं पुरुषमुपैति दिव्यम्" ॥

इति मन्त्रः पठ्यते । अस्य चायमर्थः—यथा गङ्गाद्या नद्यः प्रवहन्त्यः सत्यो नामरूपे गङ्गेत्यादीनि नामानि भेदकाकारं च विहाय समुद्रे अस्तम् अदर्शनं गच्छन्ति ; तथा तद्वत् विद्वान्=ब्रह्मवित्, नामरूपात्=देवो मनुष्य इत्यादिनाम्नस्तत्प्रवृत्तिनिमित्तात् रूपाच्च, विमुक्तः सन्, परात् समष्टिपुरुषादपि परमुत्कृष्टं दिव्यम् "आदित्यवर्णं तमसः परस्तात्" इत्याद्युक्तरीत्या अप्राकृतदिव्यमङ्गलविग्रहविशिष्टतया द्युशब्दिते तमः पारवर्तिनि देशविशेषेऽवस्थितं पुरुषम्

"भगवानिति शब्दोऽयं तथापुरुष इत्यपि ।
निरुपाधी च वर्तेते वासुदेवे सनातने ॥"

इत्युक्तरीत्या निरुपाधिकपुरुषशब्दवाच्यं वासुदेवमुपैति प्राप्नोतीति अत्र यथा गङ्गाद्या नद्यः 'इयं गङ्गा, इयं यमुना' इत्यादि व्यपदेशार्हं रूपं परित्यज्य समुद्रं प्रविशन्ति, प्रविष्टाश्च विभागानर्हसंश्लेषविशेषं प्राप्नुवन्ति; तथा ब्रह्मविदपि देवमनुष्यादिव्यपदेशार्हं रूपं परित्यज्य परमात्मानं प्राप्नोतीत्यभिधीयते ।

ततश्चोक्तदृष्टान्तबलात् सत्येव स्वरूपभेदे मुक्तिदशायां जीवात्मपरमात्मनोर्विभागानर्हसंश्लेषमात्रमेव, न तु स्वरूपैक्यमिति प्रतीयते । नहि दृष्टान्ते जले जलान्तरप्रवेशे तयोः

स्वरूपैक्यम् तोलने अधिकपरिमाणाभावप्रसङ्गेनाधिकपरिमाणोपलम्भविरोधात् । अत एव सूत्रकारैरपीयं श्रुतिर्मुक्तानां परमात्मनश्च स्वरूपभेदनियतप्राप्यप्राप्तृभावप्रतिपादनपरतया तस्मिन्नेवाधिकरणे "मुक्तोपसृप्यव्यपदेशाच्च" इति सूत्रेण व्याख्याता । मुक्तैः=संसारबन्धविनिर्मुक्तैः, उपसृप्यत्वव्यपदेशात्=प्राप्यत्वव्यपदेशाच्च द्युभ्वाद्यायतनं परमात्मेति निश्चीयत इति सूत्रार्थः । तदेवं पूर्वमन्त्रयोर्जीव ब्रह्मणोर्भेदस्यैव सोपपत्तिकं विहितत्वादुत्तरमन्त्रे च विशिष्य मुक्तिदशायां भेदस्योपदिष्टत्वाच्च तन्मध्यपतिते "निरञ्जनः परमं साम्यमुपैति" इति श्रुतिवाक्ये साम्यशब्दस्यैक्यार्थपरत्वं पूर्वोत्तरश्रुतिविरुद्धम् । अतः सादृश्यार्थकत्वमेवावश्याश्रयणीयम् । अत्रोक्तमेवात्यन्तसादृश्यमुत्तरत्र "सयो हैतत्परं ब्रह्म वेद ब्रह्मैव भवति" इति उपसंह्रियते ।

"यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये ।
दृश्यन्ते तानि तान्येव तथा भावा युगादिषु ॥"

इत्यादाविवात्यन्ततत्सादृश्यव्यञ्जनाय तत्ताव्यवहारादित्यप्यभ्युपगन्तव्यम् । इत्थं सत्येव—"यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति । एवं मुनेर्विजानत आत्मा भवति गौतम" इति कठवल्लीषु चतुर्थवल्लीमन्त्रेण मोक्षदशाप्रतिपादनपरेणैकार्थ्यमुपपद्यते ।

अयमस्य मन्त्रस्यार्थः—शुद्धे उदके आसिक्तं योजितं शुद्धमुदकं यथा तादृक् तत्सदृशमेव भवति नतु विसदृशम्, एवं यथायं दृष्टान्तस्तथा विजानतः ब्रह्मज्ञस्य मुनेस्तन्मनन-

शीलस्य आत्मा भवति । परमात्मज्ञानेन विशुद्धः सन् विशुद्धेन परमात्मना समानो भवतीत्यर्थः । अत्र हि जले जलान्तरयोजने योजितस्य जलस्य तत्सदृशत्वमेवोक्तम् । तद्दृष्टान्तश्च मुच्यमानस्य जीवस्य प्रदर्शितः । अतो जीवब्रह्मणोर्मुक्तिदशायां सादृश्यमेवानेन मन्त्रेण प्रतिपादितम् । एवं महाभारते मोक्षधर्मपर्वणि वसिष्ठकरालजनकसंवादे त्रयोदशाधिकशततमाध्याये—

"सोऽयमेवं विमुच्येत नान्यथेति विनिश्चयः ।
परेण परधर्मा च भवत्येष समेत्य वै ॥

विशुद्धधर्मा शुद्धेन बुद्धेन च स बुद्धिमान् ।
विमुक्तधर्मा मुक्तेन समेत्य पुरुषर्षभ ॥

वियोगधर्मणा चैव वियोगात्मा भवत्यथ ।
विमोक्षिणा विमोक्षश्च समेत्येह तथा भवेत् ॥

शुद्धधर्मणाशुचिश्चैव भवत्यमितदीप्तिमान् ।
विमलात्मा च भवति समेत्य विमलात्मना ॥

केवलात्मा तथाचैव केवलेन समेत्य वै ।
स्वतन्त्रश्च स्वतन्त्रेण स्वतन्त्रत्वमवाप्नुते ॥"

इति मुक्तस्य ब्रह्मणा सादृश्यप्राप्तिप्रतिपादकस्मृत्यैकार्थ्यमपि परमसाम्यश्रुतेः सादृश्यप्रतिपादकत्व एवोपपद्यते । अतः "परमं साम्यमुपैति" इति श्रुतिवाक्यस्थ साम्यशब्दः स्वस्वारस्यात् स्वारसिकार्थ परित्यागे मानाभावात् पूर्वोत्तर-

श्रुत्यनुरोधात् श्रुत्यन्तरैकार्थ्यात् स्मृत्यैकार्थ्याच्च सादृश्यपर एव, नैक्यपरः ।

किं बहुना? सूत्रकारैरेव जगद्व्यापारवर्जाधिकरणे "भोगमात्रसाम्यलिङ्गाच्च" इति सूत्रेण परमसाम्यश्रुतिस्थ साम्यशब्दस्य सादृश्यार्थकत्वमेवाङ्गीकृत्य सादृश्यस्य भोगमात्रविषयतया व्यवस्थापितत्वादुक्तश्रुतिस्थसाम्यशब्दस्यैक्यार्थकत्ववर्णनं सूत्रकाराभिप्रायविरुद्धमेव । भोगमात्रे=ब्रह्मयाथात्म्यानुभवरूपभोगमात्रे, यत्साम्यं=मुक्तस्य ब्रह्मणा सादृश्यं, तल्लिङ्गात्=तज्ज्ञापकाच्छ्रुतिवाक्यान्मुक्तस्य सृष्टिस्थित्यादि जगद्व्यापारव्यतिरिक्त विषयमेवैश्वर्यमिति निश्चीयत इति सूत्रार्थः ।

अयं भावः—"परमं साम्यमुपैति" इति यद्यपि मुक्तस्य ब्रह्मणा परमसाम्यापत्तिः श्रूयते, तथापि ब्रह्मानुभवरूप भोगमात्र एव तत्साम्यम् "सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" इति मुक्तस्य ब्रह्मणा समानभोगश्रवणात् सामान्येन श्रुतस्य साम्यस्य विशिष्य क्वचिदंशे साम्यश्रवणे तत्र पर्यवसानस्यैव न्याय्यत्वात् । इत्थं च मुक्तस्य ब्रह्मणा परमसाम्य प्राप्तिश्रवणेऽपि न जगत्सृष्ट्यादि कर्तृत्वमिति । सः=ब्रह्मोपासकः, ब्रह्मणा सह, सर्वान् कामान् =काम्यन्त इति कामाः कमनीयाः गुणाः तानश्नुते । ब्रह्मणा सह तदीयकल्याणगुणान् सर्वाननुभवतीति श्रुत्यर्थः ।

न चोदाहृतसूत्रं न परमसाम्यश्रुतेर्भोगसाम्ये पर्यवसानप्रदर्शनपरम्; अपि तु "तेनो एतस्यै देवतायै सायुज्यं समानलोकतां जयति" इति बृहदारण्यकतृतीयाध्यायपञ्चम-

ब्राह्मणस्थ श्रुतिवाक्येन भोगमात्रसाम्यप्रतिपादनाल्लिङ्गान्मुक्तस्य न जगद्व्यापार इत्येतत्प्रदर्शनपरमिति वाच्यम्, तावतापि मुक्तस्य ब्रह्मसमान भोगत्व व्यवस्थापनेन परमसाम्यश्रुतिस्थसाम्यशब्दस्यैक्यार्थत्व व्यावर्तनासिद्ध्या अस्मदभिमतसिद्धेः।

उक्तश्रुत्यर्थस्तु तेन=पूर्वोक्तोपासनेन, उ इत्यवधारणे, एतस्यै देवतायै; विभक्तिव्यत्ययश्छान्दसः; एतस्या उपास्यमानाया देवतायाः सायुज्यं=समानभोगतां समानलोकतां च जयति=प्राप्नोतीति। यत्त्वत्र सायुज्यशब्दस्य ऐकात्म्यमर्थ इति, तन्न; सह युङ्क्ते इति सयुक् तस्य भावः सायुज्यमिति हि व्युत्पत्तिः। ततश्च ऐकात्म्यार्थकत्वमुक्तव्युत्पत्तिविरुद्धम् "सामरस्यं हि सायुज्यं वदन्ति ब्रह्मवादिनः" इति शाकटायनोक्ति विरुद्धं चेति। यद्यपि, नेयं श्रुतिर्ब्रह्मविद्विषया, अपि तु प्राणोपासकविषया, तथापि तुल्यन्यायेन ब्रह्मविदोऽपि तया श्रुत्या ब्रह्मसमान भोगत्वसिद्धिरनिवार्या।

न चोदाहृतसूत्रं सगुणब्रह्मविदः समानभोगत्वप्रतिपादनपरम्, न निर्गुणब्रह्मविद इति निर्गुणब्रह्मविद्विषयायाः परमसाम्यश्रुतेरैक्यपरत्वे न विरोध इति वाच्यम्, निर्गुणब्रह्मण एवाप्रामाणिकत्वेनोक्तविभागासिद्धेः। परमसाम्यश्रुतेर्निर्गुणब्रह्मविषयत्वस्य दुर्वचत्वाच्च। "यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्" इति रुक्मवर्णत्व जगन्निमित्तत्वनिखिलनियन्तृत्व जगदुपादानत्व विशिष्टब्रह्मवेदनं विधाय "तदाविद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति" इति तथाविध वेदनस्यैवहि परमसाम्यं फल-

मुपदिश्यते। तत्कथमस्या निर्गुणब्रह्मविद्विषयता? तत्सिद्धं परमसाम्यश्रुतिस्थसाम्यशब्दः सादृश्यपर एव; नैक्यपर इति। ततश्च "गतेरर्थवत्त्वमुभयथान्यथा हि विरोधः" इत्यत्रान्यथाहि विरोध इत्यस्य परमसाम्यश्रुतिविरोध इत्यर्थवर्णनमसंगतमेव। परमसाम्यश्रुत्युक्त सादृश्यस्य समानभोगवत्त्वरूप सायुज्यपर्यवसिततया अग्न्यादिदेवतासायुज्यस्येव परदेवतासायुज्यस्यापि देशान्तरगति साध्यत्वे विरोधाभावात् "परमे व्योमन् सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" इति परमव्योमशब्दिता प्राकृतदेशविशेष एव परब्रह्मसायुज्यप्राप्तेरभिहिततया परब्रह्मसायुज्यस्यापि देशान्तरगमनसाध्यताया एव वक्तव्यत्वाच्च। अतः परोक्तः सूत्रार्थोऽनुपपन्न इति सूत्रमन्यथैव व्याख्येयम्।

तथाहि—कौषीतकिनामुपनिषदि—"स एतं देवयानं पन्थानमापद्य" इत्युपक्रम्य "स आगच्छति विरजां तां मनसात्येति तत्सुकृतदुष्कृते विधूनुत" इति देवयानमार्गमध्ये सुकृतदुष्कृतयोर्हानं श्रूयते। छान्दोग्ये तु—"अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात् प्रमुच्य। धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवामि" इति शरीरवियोगकाले तयोर्हानं श्रूयते। एवमुभयथा श्रवणेन किं सुकृतदुष्कृतयोरेकदेशस्य देहवियोगकाले हानम्, शेषस्याध्वनि? अथवा देहवियोगकाल एव तयोर्निःशेषं हानमिति संदेहे उभयश्रुत्यवैयर्थ्याय उभयथा हानमिति पूर्वपक्षे प्राप्ते, विदुषश्चरम देहवियोगोत्तरं सुकृतदुष्कृतफल भोगाभावेन

सुकृतदुष्कृतशेषानुवृत्तौ प्रयोजनविरहेण देहवियोगकाल एव सुकृतदुष्कृतयोर्निःशेषं हानमिति "सांपराये तर्तव्याभावात्" इति सूत्रेण सिद्धान्त उक्तः। सांपराये देहावसान एव सुकृतदुष्कृतयोर्निःशेषं हानम्, तर्तव्याभावात्=सुकृतदुष्कृताभ्यां प्राप्तव्यफला भावादिति सूत्रार्थः।

तर्हि देहवियोगकाले अध्वनि च तयोर्हान श्रवणस्य कथमुपपत्तिरित्याशङ्कायां कौषीतकिनामुपनिषदि "तत्सुकृतदुष्कृते धूनुत" इति वाक्यं "स एतं देवयानं पन्थानमापद्य" इति वाक्यावयवात् प्राक् पठितव्यम्। ततश्च प्रथमं सुकृतदुष्कृतहानं पश्चात् देवयानेन पथा प्रस्थानमिति अर्थलाभान्न विरोध इति "छन्दत उभयाविरोधात्" इति सूत्रेण समाहितम्। उभयाविरोधात्=दर्शितोभयविध श्रुत्यविरोधनिर्वाहाय, छन्दतः=यथेष्टं वाक्यानामन्वयो वक्तव्य इति सूत्रार्थः। एवं दर्शितश्रुतिद्वयविरोधशमनेऽपि सुकृतदुष्कृतयोरुभयथा हानानभ्युपगमे ब्रह्मविदो देवयानमार्गेण गमनश्रुतिविरोधो दुर्निरोध इत्याशङ्का परिहरणीया। तामिमामाशङ्कामनूद्य परिहरति—"गतेरर्थवत्त्वम्" इत्यादिना सूत्रद्वयेन। तत्र प्रथमसूत्रेण पूर्वपक्षिण आशङ्कानूद्यते। द्वितीयेन तु परिह्रियत इति विवेकः। सुकृतदुष्कृतलक्षणकर्मणः उभयथा एकदेशस्य देहवियोगकाले विनाशः, शेषस्याध्वनि नाशः इत्येवं द्वेधा नाशे सत्येव गतेः=गतिश्रुतेः अर्थवत्त्वमबाधितार्थकत्वं संभवति। अन्यथा देहवियोगकाल एव कर्मणां निःशेषक्षये विरोधः, अर्चिरादिना मार्गेण गमनश्रुतिविरोधः प्रसज्यत इति प्रथमसूत्रार्थः।

अयमाशयः—विदुषो देहवियोगकाल एव कर्मणां निःशेषक्षये सति 'निमित्तापाये नैमित्तिकापाय' इति न्यायेन कर्मारब्धस्य स्थूलसूक्ष्मशरीररूपद्विविधदेहस्यापि नाशप्रसङ्गेन देहविशेषसाध्य चन्द्रमःसंवादादिगर्भदेवयानमार्गगत्यसंभवेन विदुषस्तथाविधगति प्रतिपादकश्रुतेरर्थ शून्यत्वमेव प्रसज्यते। अतो द्वेधा नाश एवाभ्युपगन्तव्य इति। इमामाशङ्कां परिहरति—"उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत्" इति। उपपन्न एव विदुषो देहवियोगकाल एव कर्मणां निःशेषक्षयः, तल्लक्षणार्थोपलब्धेः; तल्लक्षणः=देहसंबन्धरूपो योऽर्थः=वस्तु तस्योपलब्धेः=उपलभ्यमानत्वात् लोकवदिति सूत्रार्थः।

अयं भावः—निःशेषक्षीणकर्मणो मुक्तस्यापि "स एकधा भवति त्रिधा भवति पञ्चधा भवति सप्तधा" इत्यादि श्रुतिषु देहसंबन्ध सद्भावस्य उपलभ्यमानतया क्षीणकर्मणः शरीरमेव नास्तीत्ययमर्थोऽनुपपन्नः। ततश्च विदुषो देहवियोगकाल एव कर्मणां निःशेषक्षयेऽपि विद्यामाहात्म्य स्थापित सूक्ष्मशरीरसंबन्धसंभवेन तेनैव शरीरेण विदुषोऽर्चिरादिमार्गगमनोपपत्तेर्न तादृशगातिविरोधः। यथा लोके सस्यार्थमन्येन निर्मितस्तटाकः सस्यादिप्रयोजनाभावेऽपि ग्रामार्थमन्येन स्थाप्यते, तथा सुखदुःखोपभोगार्थं कर्मभिरारब्धस्यैव शरीरस्य ब्रह्मविद्यया स्वफलभूतार्चिरादि मार्गगमनोपपत्तये स्थापनसंभवस्य लोकन्यायसिद्धत्वादिति।

तदेवं "गतेरर्थवत्त्वमुभयथा, अन्यथा हि विरोधः" इतिसूत्रस्य निर्गुणब्रह्मविद्यर्चिरादिगत्यभाव व्यवस्थापन

परत्वाभावेन न तद्बलेन "समानाचासृत्युपक्रमात्" इति सूत्रस्य सगुणब्रह्मविन्मात्र विषयतासिद्धिरिति तत्सूत्रस्य सामान्यतो ब्रह्मविदस्तदन्येषां च नाडीप्रवेशात् प्रागुत्क्रान्तिरविशिष्टेत्येतादृशार्थव्यवस्थापनपरताया दुरपह्नवतया "स्पष्टो ह्येकेषाम्" इति सूत्रस्य ब्रह्मविद उत्क्रान्तिप्रतिषेधपरत्वे सूत्रकृतां विप्रतिषिद्धार्थकथनप्रसङ्गो दुर्वार एव स्यात् ।

अपि च ब्रह्मविद्यानिष्ठेषु कस्यात्रोत्क्रान्तिः प्रतिषिध्यत इति विवेचनीयम् । न तावत् सद्विद्यानिष्ठस्य । छान्दोग्ये सद्विद्याप्रकरणे चतुर्दशखण्डे—"आचार्यवान् पुरुषो वेद, तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये" इति सद्विद्यानिष्ठस्य प्रारब्धावसाने ब्रह्मसंपत्तिमुक्त्वा तदुत्तरखण्डे—"यदास्य वाङ्मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम्" इति ब्रह्मसंपत्त्यर्थतया उत्क्रान्तेः प्रतिपादितत्वेन तदुत्क्रान्तेः प्रतिषेधायोगात् । न च तदविद्वद्विषयामिति शक्यं वक्तुम्, "वाङ्मनसि दर्शनाच्छब्दाच्च" इत्यादिभिः सूत्रैस्तस्या एवोत्क्रान्तेः स्वरूपं विशोध्य "समाना चासृत्युपक्रमात्" इति सूत्रेण तस्याविद्वदविद्वदुभय साधारण्यस्य सूत्रितत्वात् । परैरप्युक्तश्रुतिव्याख्यानावसरे संसारिणो यो मरणक्रमः स एवायं विदुषोऽपि सत्संपत्तिक्रमः इत्येतदाहेत्युक्तश्रुतेरवतारितत्वाच्च । नाप्यानन्दमय विद्यानिष्ठस्य । तैत्तिरीयोपानिषदि—"ब्रह्मविदाप्नोति परम्" इत्यादिना अनन्दमयविद्यां प्रस्तुत्य "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादिना ब्रह्मतद्वेदनतत्प्राप्तीनां

स्वरूपं संग्रहेण विवृत्य, पुनः "तस्माद्वा एतस्मादात्मन आकाशः संभूतः" इत्यादिना विस्तरेण तेषां स्वरूपनिरूपणावसरे "ब्रह्मविदाप्नोति परम्" इत्युपक्रमोपक्षिप्तब्रह्मप्राप्तिस्वरूपविशदीकरणाय "अथातोऽनुप्रश्नाः" इति प्राप्तिस्वरूपजिज्ञासया प्रश्नमुत्थाप्य, तत्प्रतिवचनावसरे "स य एवं वित्, अस्माल्लोकात् प्रेत्य, एतमन्नमयमात्मानमुपसंक्रामति" इत्यादिना "एतमानन्दमयमात्मानमुपसंक्रामति" इत्यन्तेन ब्रह्मप्राप्तिस्वरूपं विशदमुपदिश्य, पुनरपि तस्यैव प्राप्तिस्वरूपस्य विशदतमप्रतिपत्त्यर्थं भृगुवल्ल्याम्—"सय एवं वित्, अस्माल्लोकात् प्रेत्य, एतमन्नमयमात्मानमुपसंक्रम्य" इत्युपक्रम्य "एतमानन्दमयमात्मानमुपसंक्रम्य, इमान् लोकान् कामान्नी कामरूप्यनुसंचरन्, एतत्साम गायन्नास्ते" इत्यानन्दमयविद्यानिष्ठस्य अस्माल्लोकाल्लोकान्तरप्राप्तिपूर्वकमानन्दमयात्मप्राप्ते स्तदीयगुणानुभवपूर्वकं तद्विभूतिभूत सर्वलोकसंचारस्य चाभिहितत्वात् ।

यत्त्वत्र न जलूकादिवत् संक्रमणमिहोपदिश्यते; किं तर्हि? विज्ञानमात्रं संक्रमणश्रुतेरर्थः । ननु मुख्यमेव संक्रमणं श्रूयते "उपसंक्रामति" इति चेत्, न, अन्नमये अदर्शनात्, तस्मान्न प्राप्तिः संक्रमणमिति परैरुक्तम्, तन्न, "ब्रह्मविदाप्नोति परम्" इत्युपक्रान्तायाः "रसं ह्येवायं लब्ध्वा नन्दी भवति" इति मध्ये अभ्यस्ताया आनन्दमयादनन्यब्रह्मप्राप्तेः "एतमानन्दमयमात्मानमुपसंक्रामति" इत्यनेनोपसंहारस्य स्वरसतः प्रतीयमानतया स्वरसतः प्रतिपन्नतादृशार्थं परित्य-

ज्यार्थान्तरकल्पनस्यान्याय्यत्वात् । "विद्वान्नामरूपाद्विमुक्तः परात् परं पुरुषमुपैति दिव्यम्" इति श्रुतिस्थमुपैतिं प्राप्त्यर्थकतया "मुक्तोपसृप्यव्यपदेशाच्च" इति सूत्रेण व्याकुर्वता भगवता सूत्रकृता मुक्तिप्रकरणस्थानामाप्नोत्युपैत्युपसंक्रामतीनां प्राप्त्यर्थकतायाः स्पष्टीकृतत्वाच्च ।

अपि च नानन्दमयः परमात्मा, न च तत्र प्रवेशः संक्रमणम्; किं तु अविषयब्रह्मात्मताज्ञानेनानन्दमयस्यात्मतया भ्रान्तिगृहीतस्यातिक्रमणं बाधोऽत्र विवक्षित इति हि भवतामाशयः । सचात्यन्तानुपपन्नः, सूत्रकाराभिप्रायविरुद्धत्वात् । भगवता हि सूत्रकृता आनन्दमयाधिकरणे "आनन्दमयोऽभ्यासात्" इत्यादिभिरष्टभिः सूत्रैरानन्दमयस्यैव परमात्मत्वं व्यवस्थापितम् ।

तथाहि—तैत्तिरीये आनन्दवल्ल्यां श्रूयते—"तस्माद्वा एतस्माद्विज्ञानमयात्, अन्योऽन्तर आत्मानन्दमयः" इति । अत्रानन्दमयः किं जीवः, उत, परमात्मा इति संशये "तस्यैष एव शारीर आत्मा, यः पूर्वस्य" इति प्रकृतानन्दमयस्य शारीरत्वश्रवणात् शारीरत्वस्य च शरीरसंबन्धित्वरूपस्य जीवधर्मत्वाज्जीव एवायमानन्दमय इति पूर्वपक्षे प्राप्ते सिद्धान्त उच्यते—"आनन्दमयोऽभ्यासात्" इत्यादिना । अत्र "भेदव्यपदेशाच्चान्यः" इति अन्तरधिकरणसूत्रात् 'अन्यः' इति पदमाकृष्यते । अभ्यस्यते गुण्यत इत्यभ्यासः, अभ्यस्यमान इत्यर्थः । तथाच शतगुणितोत्तरक्रमेणाभ्यस्यमाना नन्दरूपाच्छिङ्गादयमानन्दमयो जीवादन्य इति सूत्रार्थः ।

अयं भावः—"अन्योऽन्तर आत्मानन्दमयः" इति श्रुतस्यानन्दमयात्मन आनन्दस्येयत्ता निर्णयाय "सैषानन्दस्य मीमांसा भवति" इत्युपक्रम्य "युवा स्यात् साधुयुवाध्यायकः" इत्यादिना "स एको मानुष आनन्दः" इत्यन्तेन मनुष्येष्व-संभावितं कंचिदानन्दं मनुष्यानन्दत्वेन परिकल्प्य शतगुणितं तथाविधं मनुष्यानन्दं मनुष्यगन्धर्वाणामेकानन्दं परिकल्प्य मनुष्यगन्धर्वप्रभृति चतुर्मुखपर्यन्तं शतगुणितपूर्वपूर्वानन्द-स्योत्तरोत्तरैकानन्दतां परिकल्प्य शतगुणितचतुर्मुखानन्द-स्यानन्दमयात्मसंबन्ध्येकानन्दतामभिधाय तावता आनन्द-मयात्मन आनन्दस्य निरतिशयप्रकर्षं बोधयित्वा तावतापि तदानन्दस्य यथावदुक्ततामपश्यन्ती श्रुतिः "यतोवाचो निवर्तन्ते, अप्राप्य मनसा सह, आनन्दं ब्रह्मणो विद्वान्" इति प्रकृतानन्दमयात्मानन्दस्य वाङ्मनसा गोचरतामभिधा-योपरता।

अनया च मीमांसया "आन्योऽन्तर आत्मानन्दमयः" इत्यत्र 'आनन्दमयः' इति मयडर्थः प्राचुर्यम्, तच्चापरिच्छि-न्नत्वरूपमित्युक्तं भवति। इत्थं चोक्तमीमांसावधारितापरिच्छे-द्यताकः उपाध्यनुक्तिसिद्धनिरुपाधिकताकश्चायमानन्दो जीवा-त्मसु कथंचिदप्यसंभवन् स्वाश्रयं प्रकृतानन्दमयं जीवादति-रिक्तं ज्ञापयतीति।

यत्तु "अन्योऽन्तर आत्मानन्दमयः, तस्य प्रियमेव शिरः, मोदो दक्षिणः पक्षः, प्रमोद उत्तरः पक्षः, आनन्द आत्मा, ब्रह्मपुच्छं प्रतिष्ठा" इत्यत्र किमानन्दमयावयवत्वेन

ब्रह्म प्रतिपिपादयिषितम्? उत, प्राधान्येनेति संशये "ब्रह्म-पुच्छम्" इति ब्रह्मण आनन्दमयपुच्छत्वोक्तेरानन्दमयावयवत्वेनैव ब्रह्म प्रतिपिपादयिषितमिति पूर्वपक्षे सिद्धान्त उच्यते—"आनन्दमयोऽभ्यासात्" इति । आनन्दमयवाक्यस्थब्रह्मपुच्छमिति वाक्ये श्रुतं ब्रह्म प्राधान्येन प्रतिपिपादयिषितम् । "असन्नेव स भवति, असद्ब्रह्मेति वेदचेत् । अस्ति ब्रह्मेति चेद्वेद, सन्तमेनं ततो विदुरिति" इति ब्रह्मशब्दस्याभ्यासदर्शनादिति सूत्रार्थः ।

अयं भावः—"अन्योऽन्तर आत्मानन्दमयः" इत्यानन्दमयपर्याये आनन्दमयो न प्राधान्येन प्रतिपिपादयिषितः, तस्य प्राधान्येन प्रतिपिपादयिषितत्वे अनन्तरश्लोके आनन्दमयोऽनुकृष्येत । अन्नमयादि पर्यायगतश्लोकेष्विवान्नमयादिः । न च सोऽनुकृष्यते । अनुकृष्यते पुनः पुच्छतयोक्तं ब्रह्म । अत आनन्दमयपर्याये पुच्छतयोक्तं ब्रह्मैव प्राधान्येन प्रतिपिपादयिषितम् । आनन्दमयस्तु अन्नमयादिवत् तत्प्रतिपत्त्युपायतया प्रतिपिपादयिषितः । अतो नानन्दमयः परमात्मा । अपि तु "ब्रह्मपुच्छं प्रतिष्ठा" इत्युक्तमेव परमात्मेति इति व्याख्यानम्; तत् "आनन्दमयः" इति श्रुतस्य धर्मिणो हानम्, अश्रुतस्य धर्मिणः कल्पनम्, पूर्वोत्तराधिकरणेष्वनुवृत्तस्य प्रधानजीववैलक्षण्यरूपसाध्यस्य हानम्, तेष्वदृष्टस्य साध्यस्य कल्पनम् इत्यादि बहुदोषदुष्टत्वादनुपादेयम् ।

"आनन्दमयः" इति धर्मिवाचकं पदं पूर्वोत्तराधिकरणेषु साध्यसमर्पणाय अन्तराधिकरणे "भेदव्यपदेशाच्चान्यः"

इति सूत्रे अन्यपदं धर्म्युपस्थापकानन्दमयपदोपस्थापित-तया अविलम्बितोपस्थितिकस्यानन्दस्याभ्यासहेतुतालाभाय "आनन्दमयोऽभ्यासात्" इति आनन्दमयपदाव्यवहितोत्तर-मभ्यासपदं च प्रयुञ्जानो भगवान् सूत्रकारः पुनरानन्दमय-स्यैव यथोक्तरीत्या परमात्मत्वमभिप्रैति। अत एव आनन्दा-द्यधिकरणे आनन्दत्वादीनां ब्रह्मधर्मत्वेन सर्वासु ब्रह्मविद्या-सूपसंहार्यताम् "आनन्दादयः प्रधानस्य" इति सूत्रेणाभि-धाय "प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे" इत्य-नन्तर सूत्रे आनन्दमयं प्रकृत्याम्नातानां प्रियशिरस्त्वादीना-मपि ब्रह्मधर्मत्वाविशेषात् सर्वासु ब्रह्मविद्यासु उपसंहार्यता स्यादित्याशङ्क्य निराकृतवान्। यद्यानन्दमयस्या ब्रह्मता-मभिसंदध्यात् सूत्रकारः कथं तर्हि प्रियशिरस्त्वादीनामब्रह्म-धर्माणां सर्वत्र प्राप्तिमाशङ्केत? श्रुतिरप्यानन्दमयस्यैव पर-मात्मत्वं स्वरसतोऽभिप्रैति।

तथाहि—मुमुक्षुजनानुजिघृक्षुः श्रुतिः "ब्रह्मविदा-प्नोति परम्" इत्युपक्रममाणा ब्रह्मेति परतत्वं, विदिति पर-महितम्, आप्नोति परमिति परमप्राप्यं चोपदिश्य, "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यनेन ब्रह्मस्वरूपम् "योवेदनिहितं गुहायाम्" इति वेदनस्वरूपम् "सोऽश्नुते सर्वान् कामान् सह, ब्रह्मणा विपश्चिता" इति प्राप्यस्वरूपं च संग्रहेण विवृत्य, पुनर्विस्तरेण व्याचिख्यासुः परब्रह्मणः सकलेतरपरि-त्यागपूर्वकं प्राप्यत्वोपपादनाय "तस्माद्वा एतस्मादात्मन आकाशः संभूतः" इति तस्यैतस्य ब्रह्मणः सर्वान् प्रति

निरुपाधिकात्मत्वमभिधाय, तदभिधानव्यञ्जितेन निरुपाधिकशेषित्वेन तस्य परमप्राप्यत्वमुपपाद्य पुनरपि तदेव परमप्राप्यत्वं तदुपयुक्तगुणविभूतिप्रकर्षप्रयुक्तपरमभोग्यता प्रदर्शनेनोपपादयितुं परमपुरुषार्थसाधनानुष्ठानोपयोगिकरणकलेबरप्रदानपूर्वकं सकलचेतनान्तरात्मतयावस्थानकथनमुखेन तस्य परमशेषिणः सकलचेतनोज्जीवने स्वतः प्रवृत्ततां तेन तस्य सूपासतां च व्यञ्जयितुं प्रागुक्तमात्मत्वं सर्वान्तरत्वेनोपपादयितुं च "तस्माद्वा एतस्मादात्मन आकाशः संभूतः" इत्यादिना "अन्नात्पुरुषः" इत्यन्तेन तत्कृतभूतभौतिक सृष्टिमभिधाय लोके यथा सूक्ष्मामरुन्धतीं दिदर्शयिषुः पुरुषः संनिहितां स्थूलां तारां प्रदर्श्य, प्रथममियमरुन्धतीत्यभिधाय, तत्रारुन्धतीबुद्धौ प्रतिष्ठितायां पुनरपि तत्र तां बुद्धिं विनिवर्त्य, संनिहितां सूक्ष्मां सूक्ष्मतमां च प्रदर्श्य क्रमेण तात्त्विकारुन्धतीं प्रदर्शयति, तद्वत् प्रथमं स्थूलं शरीरम् "स वा एष पुरुषोऽन्नरसमयः" इति प्रदर्श्य, तदन्तरं प्राणवृत्तिप्रचुरं प्राणमयम् "एष स आत्मा" इति प्रदर्श्य, तत्र प्रक्रान्तात्मबुद्धौ प्रतिष्ठितायां तदन्तरं मननवृत्तिप्रचुरं मनोमयम् 'एष स आत्मा' इति प्रदर्श्य, पूर्वस्मिन् प्राणमये प्रक्रान्तात्मबुद्धिं विनिवर्त्य, पुनरपि तदन्तरं विज्ञानप्रचुरं विज्ञानमयं जीवात्मानम् 'एष स आत्मा' इति प्रदर्श्य, तदन्तरमानन्दप्रचुरमानन्दमयम् 'एष स आत्मा' इत्युपदिश्योपरता ।

पुनरपि "आनन्दमयः" इत्यत्र मयडर्थः प्राचुर्यम्, आनन्दश्च गुणविभूतिप्रकर्षप्रयुक्त इति व्यञ्जयितुम् "सैषा-

नन्दस्य मीमांसा भवति" इत्युपक्रम्य "युवास्यात् साधु युवाध्यायकः" इत्यादिना गुणविभूतिप्रकर्षप्रयुक्तमनुष्यानन्द-विशेषमभिधाय, उत्तरोत्तरस्थाने शतगुणस्तथाविधानन्द इति चोक्त्वा, "स एको ब्रह्मण आनन्दः" "यतो वाचो निवर्तन्ते" इति गुणविभूतिप्रकर्षप्रयुक्तब्रह्मानन्दस्य वाङ्मन-सापरिच्छेद्यतामाह। अनेन च गुणविभूतिप्रकर्षप्रयुक्त निर-तिशयानन्दवत्तया प्रागुक्तानन्दमयात्मनो ब्रह्मणः सकलेतर-परित्यागपूर्वक परमप्राप्यत्वौपयिक भोग्यताप्रकर्ष व्यनक्ति। उपक्रमे "ब्रह्मविदाप्नोति परम्" इत्यत्र परमप्राप्यतयोक्तं परं ब्रह्म; उपसंहारेऽपि "एतमानन्दमयमात्मानमुपसंक्रामति" इत्यानन्दमयशब्देन प्राप्यवाचिना व्यपदिशति। न चात्रोप-संक्रामति रतिक्रान्त्यर्थः शक्यो वक्तुम्, तस्य तदर्थत्वेना-व्युत्पन्नत्वात्। लक्षणाकल्पने तु सैव दोषः। मध्ये च "सोऽकामयत बहुस्यां प्रजायेयेति" इत्यत्र स इति प्रकृता-नन्दमयं परामृश्य, तस्य जगत्कारणत्वमाह। यद्यानन्दमयः परमात्मा न स्यात् तर्हि तस्य जगत्कारणत्वमुच्यमानमनु-पपन्नं स्यात्।

न च "सोऽकामयत" इत्यत्र तच्छब्देन नानन्दमयः परामृश्यते, अपि तु "तस्माद्वा एतस्मादात्मन आकाशः संभूतः" इति प्रकृत आत्मा परामृश्यत इति नानुपपत्तिरिति वाच्यम्, सर्वनाम्नामव्यवहितप्रधानपरामर्शित्वस्यैव स्वारसि-कतया "तस्माद्वा एतस्मादात्मनः" इति व्यवहिताऽप्रधान-परामर्शित्वस्यायुक्तत्वात्। अत उपक्रमप्रभृत्युपसंहारपर्यन्त-

मानन्दवल्ल्याः स्वरसतः पर्यालोचने आनन्दमयः परमात्मेत्येव श्रुतेराशय इति स्पष्टमवगम्यते ।

न चानन्दमयस्य परमात्मत्वे बाधकं किंचित् पश्यामः। यत्तु 'आनन्दमयः' इति मयट् विकारवाची, विकारार्थकमयट् प्रत्यय प्रवाहपतितत्वात् । ततश्चानन्दविकारोऽयमानन्दमयो न परमात्मा भवितुमर्हति, परमात्मनो निर्विकारत्वात् अस्य च विकाररूपत्वादिति, तन्न, अन्नरसमयः प्राणमयो मनोमयो विज्ञानमयः इति सर्वत्र मयटः प्राचुर्यार्थत्वेन विकारार्थत्वाभावात् ।

यच्च "तस्य प्रियमेव शिरः" इत्यादिना शिरः पक्षपुच्छादिमत्तयावयवित्वेनोक्तस्यानन्दमयस्य न परमात्मत्वं संभवदुक्तिकम्, परमात्मनोऽवयवित्वा संभवादिति; तदपि न, परोक्षस्यानन्दमयस्य प्रतिपत्तृबुद्ध्यारोहसौकर्याय प्रियमोदादीनामानन्दविशेषाणां शिरः प्रभृतित्वेन रूपणमात्रस्य तत्र विवक्षितत्वेनानन्दमयस्य परमार्थतोऽवयवित्वस्य तत्राविवक्षितत्वात् ।

यदप्यानन्दमयपर्याये "तदप्येष श्लोको भवति" इत्यनुक्रान्ते "असन्नेव स भवति" इति श्लोके आनन्दमयमननुकृष्य ब्रह्मशब्दस्याभ्यस्ततया आनन्दमयपर्याये पुच्छतया निर्दिष्टमेव प्रकान्तं ब्रह्मेति गम्यत इति; तदपि न, प्रकरणस्थानां ब्रह्मात्मानन्दमयशब्दानामेकार्थत्वेन तेष्वन्यतमेन श्लोके निर्देशस्य आनन्दमयस्य परमात्मत्व बाधकत्वाभावात्।

इदं पुनरत्र विवेचनीयम्—यद्यानन्दमयो न परमात्मा, तर्हि "सैषानन्दस्य मीमांसा भवति" इत्यादिः कस्यानन्दमीमांसेति। न तावद्ब्रह्मणः, ब्रह्मण आनन्दवत्तायास्त्वत्पक्षे प्रागनुक्तत्वात् ब्रह्मानन्दमीमांसाया अप्रसक्तत्वेन "सैषानन्दस्य मीमांसा भवति" इत्यादेरप्रसक्त मीमांसात्वप्रसङ्गात्। नाप्यानन्दमयस्य, "स एको ब्रह्मण आनन्दः" इति निगमनविरोधात्। अतो निरुक्तानन्द मीमांसाऽविरोधायानन्दमय एव प्रक्रान्तं ब्रह्मेति श्रुतेराशय इत्यकामेनाप्यभ्युपगन्तव्यम्।

इत्थं चानन्दमयविद्यानिष्ठस्य तद्विद्याफलवाक्ये "सय एवंवित्, अस्माल्लोकात् प्रेत्य, एतमानन्दमयमात्मानमुपसंक्रम्य, इमान् लोकान् कामान्नी कामरूप्यनुसंचरन्, एतत्साम गायन्नास्ते" इत्यत्र अस्माल्लोकाल्लोकान्तरप्राप्तिपूर्वकमानन्दमयात्म प्राप्त्यभिधानेन तद्विद्यानिष्ठस्यापि देहादुत्क्रान्तिसिद्ध्या तस्याप्युत्क्रान्तिप्रतिषेधो न संभवति। नापि बृहदारण्यके षष्ठाध्याये चतुर्थब्राह्मणे—"सवा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते सर्वस्य वशी सर्वस्येशानः" इत्यादिनाम्ना तद्धार्दविद्यानिष्ठस्य, गुणोपसंहारपादे कामाद्यधिकरणे उदाहृत बृहदारण्यकोक्तहार्दविद्यायाश्छान्दोग्योक्त दहरविद्यायाश्चैक्यस्य व्यवस्थापितत्वेन छान्दोग्ये दहरविद्याप्रकरणे तद्विद्यानिष्ठस्य "अथ यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्वमाक्रमते स ओमिति वाह उद्वामीयते स यावत् क्षिप्ये-

न्मनस्तावदादित्यं गच्छत्येतद्वै खलु लोकद्वारं विदुषां प्रपदनं निरोधोऽविदुषां तदेष श्लोकः—शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङ्न्या उत्क्रमणे भवन्ति" इत्यनेन देहादुत्क्रम्य मूर्धन्यनाड्योर्ध्वलोकप्राप्तिपूर्वक ममृतत्व प्राप्तिश्रवणेन बृहदारण्यकगतहार्दविद्यानिष्ठस्यापि तत एवोत्क्रान्त्यादिसिद्ध्या तस्याप्युत्क्रान्तेः प्रतिषेधायोगात् ।

तथाहि—छान्दोग्ये अष्टमप्रपाटके श्रूयते—"अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यम्" इत्यादि । तथा वाजसनेयके षष्ठाध्याय चतुर्थब्राह्मणे—"स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते सर्वस्य वशी सर्वस्येशानः" इत्यादि । तत्र किमनयोर्विद्याभेदः, उत विद्यैक्यमिति संशये एकत्र वशित्वादि गुणविशिष्ट आकाशे शयान उपास्यः, अन्यत्रापहतपाप्मत्वादिगुणविशिष्ट आकाश इति रूपभेदाद्विद्याभेद इति पूर्वपक्षे प्राप्ते सिद्धान्तः—"कामादीतरत्र तत्र चायतनादिभ्यः" इति । इतरत्र तत्र च=छान्दोग्ये वाजसनेयके च, कामादि='सत्यकामः' इत्यादिकमेव रूपम्, आयतनादिभ्यः=हृदयायतनत्व सेतुत्व विधरणत्वादिभ्यः प्रत्यभिज्ञापकेभ्यः, सैवेयं विद्येति प्रत्यभिज्ञायमानत्वादिति सूत्रार्थः ।

अयं भावः—"अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशः" इत्यत्र दहराका-

शस्य परमात्मासाधारणधर्मयोगात् परमात्मत्वं दहराधिकरणे निर्णीतम् । वाजसनेयके—"य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते सर्वस्य वशी" इत्यत्राकाशे शयानस्य परमात्मा साधारणधर्मश्रवणात् परमात्मत्वं निश्चीयते । इत्थं चोभयत्र परमात्मैवोपास्यः, तस्य च छान्दोग्ये श्रुतं हृदयायतनत्वं वाजसनेयकेऽपि श्रूयते । तथा "य आत्मा स सेतुर्विधृतिरेषां लोकानामसंभेदाय" इति छान्दोग्ये श्रुतं सेतुत्वं विधरणत्वं च "एष सेतुर्विधरण एषां लोकानामसंभेदाय" इति वाजसनेयकेऽपि श्रूयते । अत एवमादिभिः प्रत्यभिज्ञापकैर्विद्यैक्यं निश्चीयते रूपमप्युभयत्र अपहतपाप्मत्वादिगुणाष्टकमेव; वाजसनेयके श्रुतवशित्वादीनां छान्दोग्य श्रुतापहतपाप्मत्वादि गुणाष्टकान्तर्गतसत्यसंकल्पत्वविशेषरूपतया सत्यसंकल्पत्वस्यैवोपास्यतालाभेन सत्यसंकल्पत्वेन च तत्सहचरितानामपहतपाप्मत्वादीनामपि सिद्धेः ।

वस्तुतस्तु, अपहतपाप्मत्वमेवात्र श्रूयते । तद्धि कर्मफलाश्लिष्टत्वरूपम् । तच्चात्र "स न साधुना कर्मणा भूयान् नो एवासाधुना कनीयान्" इति श्रूयत एव । ततश्च तत्पूर्वकाणां विजरत्वादीनामपि अत्र सिद्धिर्द्रष्टव्या । यत्तु उक्तवाजसनेयके निर्गुणविद्या विवक्षिता, छान्दोग्ये तु सगुणविद्येति न विद्यैक्यम्; तथापि वाजसनेयके श्रुतावशित्वादयः छान्दोग्ये उपासनार्थमुपसंहार्याः । छान्दोग्ये श्रुतं सत्यकामत्वादिकं तु स्तुत्यर्थं वाजसनेयके उपसंहार्यम् उभयत्र हृदयायतनत्वादि साम्यादिति सूत्राशयवर्णनम; तदयुक्तम्,

सूत्रे 'संबध्यते' इत्यध्याहारेण कामादि सत्यकामत्वादिकं वशित्वादिकं च इतरत्र तत्र वाजसनेयके छान्दोग्ये च संबध्यते इत्येतावतोऽर्थस्य सूत्रेण लाभसंभवेऽपि वाजसनेयके स्तुत्यर्थं छान्दोग्ये उपासनार्थं चेत्यस्य सूत्रासंस्पर्शित्वात्। गुणोपसंहारपादोपक्रमे "उपसंहारोऽर्थाभेदाद्विधिशेषवत् समाने च" इति सूत्रेऽन्यत्राम्नातगुणानामन्यत्रोपसंहारे विद्यैक्यं प्रयोजकं वदतः सूत्रकारस्यात्र सूत्रे विद्यैक्यविरहेऽपि गुणोपसंहारविधानाभिप्राय कल्पनस्य संदर्भविरुद्धत्वाच्च सर्ववेदान्तेषु वैश्वानराद्युपासने समाने अभिन्ने सति विधिशेषवत् एकस्मिन् वेदान्ते वैश्वानरादि तत्तद्विद्याविधिशेषगुणानामिव वेदान्तान्तरे श्रुतानामपि गुणानामर्थाभेदात् तत्तद्विद्योपकारकत्वरूपप्रयोजनैक्या दुपसंहारोऽनुसंधानं कार्यमिति हि तत्सूत्रार्थः।

एवं वेदान्तान्तरे आम्नातगुणानां वेदान्तान्तरे उपसंहारे विद्यैक्यस्य प्रयोजकतामभिधाय कुत्र विद्यैक्यं कुत्र नेति विचाराय प्रवृत्तो भगवान् सूत्रकारोऽस्मिन्नधिकरणे अकाण्डे विद्यैक्यविरहेऽपि उपसंहार्यतां कथमिव ब्रूयात्? उक्तप्रयोजनसूत्रं व्याचक्षाणैः परैरेवहि "यदि हि विज्ञानभेदो भवेत् ततो विज्ञानान्तरनिबद्धत्वाद्गुणानां प्रकृतिविकृति भावाभावाच्च न स्यादुपसंहारः" इति सूत्राशयो वर्णितः। अतोऽत्र विद्यैक्यविरहेऽपि उपसंहार्यताभिप्रायकल्पनं संदर्भविरुद्धमेव। अपि चात्र विद्यैक्यविरहे विद्यान्तराम्नातगुणानां विद्यान्तरे उपसंहारस्य निर्निमित्तत्वापातादप्युक्ताशयवर्णनं न सम्यक्।

न च हृदयायतनत्व सेतुत्व विधरणत्वादीनामुभयत्र श्रवणेन साम्यात् परस्परगुणोपसंहार इति न निर्निमित्तताप्रसङ्ग इति वाच्यम्, केन चिदाकारेण साम्यस्य विद्यान्तरेष्वपि सुलभत्वेन वाजसनेयोक्त हार्दविद्यायां छान्दोग्योक्त हार्दविद्यागुणानामेवोपसंहार इत्यत्र नियामकाभावप्रसङ्गात्। भूयोभिराकारैः साम्यस्य नियामकत्वानुसरणेऽपि शाण्डिल्यविद्यायामपि तथाविधसाम्यसत्त्वात् तद्गुणानामप्युपसंहार्यताया दुर्निवारत्वात्। "मनोमयोऽयं पुरुषो भाः सत्यं तस्मिन्नन्तर्हृदये यथा व्रीहिर्वा यवो वा स एष सर्वस्य वशी सर्वस्येशानः सर्वमिदं प्रशास्ति य दिदं किंच" इत्याम्नातायास्तस्या अपि हृदयायतनत्व सर्ववशित्व सर्वेशानत्वादिभिर्भूयोभिराकारैः साम्यसत्त्वात्।

अपि च "सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्" इति सूत्रेण संयोगरूपचोदनाख्यानामविशेषेण विध्यैक्यं व्यवस्थाप्य "उपसंहारोऽर्थाभेदाद्विधिशेषवत् समाने च" इति सूत्रेण विध्यैक्येन गुणोपसंहारं व्यवस्थापितवतः सूत्रकारस्य विध्यैक्यप्रयोजकस्य संयोगरूपचोदनाख्यानामविशेषस्य सत्त्वे तन्निबन्धनैक्यस्यैव गुणोपसंहार हेतुत्वाभिप्रायवर्णनस्योचिततया प्रकृते च संयोगादीनामविशेषस्य विध्यैक्यहेतोरक्षतत्वेन तन्निबन्धनविध्यैक्यमुपेक्ष्य सूत्रकारानुक्तस्यातिप्रसक्तस्य कस्यचिदन्यस्य गुणोपसंहारे हेतुत्वं सूत्रकाराभिमतमित्युक्तिरत्यन्तासमञ्जसैव।

तथाहि—फलसंयोगस्तावदुभयत्राविशिष्टः। "अभयं वै ब्रह्म भवति य एवं वेद" इति वाजसनेयके "अस्मा-

च्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेनरूपेणाभिनिष्पद्यते" इति छान्दोग्ये च ब्रह्मप्राप्तेरेव दहरविद्याफलत्व श्रवणात्। ब्रह्म भवति स्वरूपाविर्भावेण ब्रह्मसदृशो भवतीति श्रुत्यर्थः। रूपमप्युभयोः प्रागुक्तरीत्या अपहतपाप्मत्वादि गुणाष्टकविशिष्टं ब्रह्मैव। चोदना च "तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः" इति वाजसनेयके "तस्मिन् यदन्तस्तदन्वेष्टव्यम्" इति छान्दोग्ये चाविशिष्टा। आख्या च उभयत्र हार्दविद्येत्यविशिष्टा। अतः संयोगादीनामविशिष्टत्वेन विद्यैक्यं दुरपह्नवम्।

यत्तु वाजसनेयके निर्गुणविद्या विवक्षिता, छान्दोग्ये तु सगुणविद्येति न तयोरैक्यमिति, तन्न; वाजसनेयकेऽपि गुणविशिष्टवेदनस्यैव विधित्सितत्वावगमात्। तथाहि—तत्र "तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत" इत्युपासनं विधाय, "सवा एष महानज आत्मा" इत्युपास्यगुणानुपक्रम्य, "एष सर्वस्य वशी सर्वस्येशानः" इत्यादिना तस्य सत्यसंकल्पत्वम् "एष न साधुना कर्मणा भूयान्" इत्यादिना अपहतपाप्मत्वं चोपदिष्टम्। अत्र चापहतपाप्मत्वादि सत्यसंकल्पत्वान्तेषु आद्यन्तयोर्ग्रहणेन तन्मध्यपतिता विजरत्वादयोऽपि विवक्षिता इति विज्ञायते। ततश्चापहतपाप्मत्वादि गुणाष्टक विशिष्टतयोपासनमत्र विधित्सितमिति निश्चीयते।

न चोपरिष्टात् "स एष नेति नेत्यात्मा" इति गुणनिषेधात् निर्गुणमेवात्र प्रतिपिपादयिषितमित्यवगम्यते, स एष प्रक्रान्त आत्मा नेति नेति पूर्वोक्तप्रकारविशिष्टो नेति

तदर्थात इति वाच्यम्, "स एष नेति नेति" इत्यस्योक्तार्थत्वे परमात्मनः प्रमाणान्तराप्राप्तान् सर्ववशित्वादीन् गुणान् स्वयमेव विधाय, पुनः स्वयमेव तत्प्रतिषेधेन श्रुतेरुन्मत्तत्वप्रसङ्गात्। अपि च उपक्रमोपसंहारयोर्विरोधे उपक्रमाविरोधेनोपसंहारस्य नेतव्यताया उपक्रमाधिकरणन्यायसिद्धतया प्रकृते "सर्वस्य वशी" इत्यादि गुणविधायकोपक्रमवाक्यविरोधेनोपसंहारगत नेतिनेतीत्यादि वाक्यस्य गुणनिषेधार्थकत्व मनुपपन्नम्।

न च तस्याप्युपक्रमभूतेन "मनसैव द्रष्टव्यम्, नेह नानास्ति किं च न, मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" इत्यनेन ब्रह्मणि कृत्स्नविशेषनिषेधात् "सर्वस्य वशी" इत्यादेर्न गुणविधायकतासंभव इति "स एष नेति नेति" इत्यादि निषेध्य समर्पकत्वमेव तस्याश्रयणीयमिति वाच्यम्, "नेह नानास्ति किं च न" इत्यस्य ब्रह्मणि विशेषनिषेधकत्वाभावात्। तेन ह्यब्रह्मात्मकं वस्तु निषिध्यते। पूर्वत्र "यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः। तमेवमन्य आत्मानं विद्वान् ब्रह्मामृतोऽमृतम्" इति मन्त्रे इन्द्रियाणामाकाशोपलक्षितानां भूतानां च ब्रह्माश्रितत्वकथनेन ब्रह्मणो नियताधारत्वं प्रपञ्चस्य नियताधेयत्वं च व्यञ्जितम्। तेन प्रपञ्चस्य ब्रह्मशरीरत्वेन ब्रह्मात्मकत्वं प्रदर्शितम्। एवं सर्वस्य ब्रह्मात्मकत्वं प्रदर्श्य, लोके तत्तद्वस्तु अन्यान्याश्रित मनाश्रितं च दृश्यते; तत् कथं सर्वस्य ब्रह्माश्रितत्वमित्याशङ्कामपनेतुमयं मन्त्रः प्रवृत्तः।

अस्य चायमर्थः—मनसैव योगपरिशुद्धेन मनसैवेदं द्रष्टव्यं साक्षात्करणीयम्, न प्रत्यक्षादि प्रमाणान्तरगम्यमित्यर्थः। तेन प्रत्यक्षविरोधः परिहृतो भवति। इह प्रपञ्चे किंचन किंचिदपि नाना किंचित् स्वनिष्ठम्, किंचित् ब्रह्मेतरनिष्ठमित्येवं नानाप्रकारं नास्ति, सर्वं ब्रह्मैकाश्रितत्वेन ब्रह्मात्मकमित्यर्थः। यः पुमानिह प्रपञ्चे नानेव स्वनिष्ठत्वेन ब्रह्मान्यनिष्ठत्वेन वा पश्यति; अत्र इवकारेणाब्रह्मात्मकत्वस्यापारमार्थ्यं सूच्यते; सः मृत्योर्मृत्युं संसारात् संसारमाप्नोतीत्यर्थः। "नेह नानास्ति" इत्यादेः प्रपञ्चमिथ्यात्वपरत्वे ब्रह्मणो निर्विशेषत्वपरत्वे वा "यस्मिन् पञ्चपञ्चजनाः" इत्यादि पूर्वमन्त्रविरोधो दुरुद्धरः, तेन ब्रह्मणः सकलप्रपञ्चाधारत्व प्रतिपादनात्। नहि प्रत्यक्षादिप्रमाणान्तरानवगतं ब्रह्मणः सकलप्रपञ्चाधारत्वं श्रुतिः स्वयमेवाभिधाय, पुनः स्वयमेव तत् प्रतिषेधतीति सांप्रतम्, विधिनिषेधयोर्वैयर्थ्यप्रसङ्गात्। अतः पूर्वसंदर्भस्य ब्रह्मणि गुणनिषेधकत्वाभावात्; प्रत्युत "धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः" इति सूत्रकृता महिमत्वेन श्लाघित जगद्विधरणरूपगुणप्रतिपादकत्वात् "सर्वस्य वशी" इत्यादेर्गुणविधायकत्वस्य निर्बाधतया तद्विरोधेन "स एष नेति नेति" इत्यादेर्गुणनिषेधकत्वमनुपपन्नमेव।

किं बहुना? बृहदारण्यके चतुर्थाध्याये तृतीयब्राह्मणे—"द्वेवाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं च" इत्युपक्रम्य "तस्य हैतस्य पुरुषस्य रूपं यथा माहारजतं वासो यथा पाण्ड्वाविकं

यथेन्द्रगोपो यथाग्न्यर्चिर्यथा पुण्डरीकं यथा सकृद्विद्युत्तं सकृद्विद्युत्तेवहवा अस्य श्रीर्भवति, य एवं वेद, अथात आदेशो नेति नेति नह्येतस्मादिति नेत्यन्यत्परमस्ति" इत्यत्र "अथात आदेशो नेति नेति" इत्यनेन पूर्वप्रकृतं मूर्तामूर्तात्मकरूपद्वयं "तस्य हैतस्य पुरुषस्य रूपम्" इत्यादिनोक्त आकारविशेषश्च प्रतिषिध्यत इत्याशङ्क्य नात्र पूर्वप्रकृतं रूपद्वयमाकारविशेषश्च प्रतिषिध्यते; तथासति मूर्तामूर्तात्मकप्रपञ्चस्य ब्रह्मरूपत्वं प्रमाणान्तरानवगतं स्वयमेव विधाय, पुनः स्वयमेव तत्प्रतिषेधे श्रुतेरुन्मत्तत्वप्रसङ्गात्। अपि तु रूपद्वयकथनेन या इयत्ता प्रकृता, ताम् 'इति' शब्देन प्रक्रान्तप्रकारवाचिना परामृश्य, तां प्रतिषेधति "नेति नेति" इति श्रुतिः। तथा च 'इति न' एतावत्प्रकारमात्रविशिष्टं नेति तदर्थ इति श्रुतेरभिप्रायं "प्रकृतैतावत्त्वं हि प्रतिषेधति, ततो ब्रवीति च भूयः" इति सूत्रेण विशदयन् भगवान् सूत्रकारस्तुल्यन्यायेन प्रकृतश्रुतेरपि प्रकृताकारप्रतिषेधार्थत्वं प्रतिषेधति। हि=यतः, विहितस्य प्रतिषेधो न संभवति, अतः, प्रकृतैतावत्त्वं=प्रकृतं यदेतावत्त्वम्=इयत्ता, तां प्रतिषेधति "अथात आदेशो नेति नेति" इति श्रुतिः। अनन्तरं भूयः बहुगुणजातं ब्रवीति च इत्युक्तसूत्रार्थः।

अयं भावः—"अथात आदेशो नेति नेति" इत्येतदनन्तरं इत्थं श्रूयते। "नह्येतस्मादिति नेत्यन्यत्परमस्ति, अथ नामधेयं सत्यस्य सत्यं प्राणावै सत्यं तेषामेष सत्यम्" इति। अयमर्थः—इति नेति यदुक्तमेतस्माद्ब्रह्मणः परं स्वरू-

पगुणविभूतिभिरत्युत्कृष्टमन्यन्न हि=नास्ति हि। अथास्य नामधेयं सत्यस्य सत्यमिति, तद्याचष्टे श्रुतिः—"प्राणावै सत्यम्" इति। प्राणसाहचर्यात् प्राणा इति जीवात्मानो लक्ष्यन्ते; ते सत्यम् एकरूपसत्तावन्तः, तेषां स्वरूपान्यथाभावाभावात्। तेषां जीवानामपि एष परमात्मा सत्यं स्वरूपस्वभावयोरन्यथाभावाभाववानित्यर्थः। तथा च "द्वे वाव ब्रह्मणो रूपे" इत्यादिना महता परिकरबन्धेन विहितस्य मूर्तामूर्तात्मकरूपद्वयस्याकारविशेषस्य च निषेधायोगात् "नेति नेति" इत्यस्य गुणनिषेधार्थत्वे तदुत्तरं पुनर्बहुतरगुणविधानायोगाच्च 'नेति नेति' इत्ययं निषेधो न गुणविभूतिविषयः, अपि तु रूपद्वयेऽभिहिते एतावदस्य रूपमिति रूपेयत्ता या प्राप्ता तद्विषयः। अत एव तदुत्तरं परत्वादिबहुतरगुणविधानं संगच्छते इति।

यत्तु "द्वे वाव ब्रह्मणो रूपे" इत्यादिना रूपस्य तद्वतो ब्रह्मणश्च प्रकृतत्वाविशेषात् "अथात आदेशो नेति नेति" इत्यनेन तदुभयमपि प्रतिषिध्यत इत्याशङ्कां परिहरति "प्रकृतैतावत्त्वम्" इत्यादिना। प्रकृतं यत् एतावत् परिच्छिन्नं मूर्तामूर्तलक्षणं ब्रह्मणो रूपं तदेष नेति नेतीति शब्दः प्रतिषेधति। ततः प्रतिषेधात् भूयः पुनः ब्रवीति चान्यत् परमस्तीति इति सूत्रार्थः।

अयं भावः—न तावदुभयप्रतिषेधो युक्तः, शून्यवादप्रसङ्गात्। नापि ब्रह्मप्रतिषेधः, न हि महता परिकरबन्धेन "ब्रह्मविदाप्नोति परम्", "सत्यं ज्ञानमनन्तं ब्रह्म" इत्येव-

मादिना वेदान्तेषु ब्रह्म प्रतिपाद्य, तस्यैव पुनरभावोऽभिलप्येत, "प्रक्षालनाद्धि" इति न्यायेन ब्रह्मानुपदेशस्यैव युक्तत्वात् । अतो मूर्तामूर्तलक्षणप्रपञ्च एव प्रत्यक्षावगतोऽनूद्यात्र प्रतिषिध्यते, तस्य प्रतिषेधार्हत्वात् । अपि च "नेति नेति" इति निषेधानन्तरं "नह्येतस्मादिति नेत्यन्यत्परमस्ति" इत्याह, इति नेत्यादिष्टात् एतस्माद्ब्रह्मणोऽन्यन्नह्यस्ति परं ब्रह्मास्तीति तदर्थः । अतश्च उत्तरवाक्ये ब्रह्मणोऽस्तित्वाभिधानादपि "नेति नेति" इति प्रपञ्चस्यैव निषेध इत्यवगम्यत इति व्याख्यानम्, तन्न; सूत्राक्षराननुगुणत्वात् अनुपपन्नत्वाच्च ।

तथाहि; सूत्रे "प्रकृतैतावत्त्वं हि प्रतिषेधति" इत्यत्र एतावत्पदोत्तरं त्वप्रत्ययश्रवणेन एतावत्त्वस्येयत्तारूपस्य प्रतिषेधः श्रुत्या क्रियत इत्यर्थो लभ्यते; नतु एतावतः प्रतिषेधः क्रियत इति । इत्थं च प्रकृतं यदेतावत इयत्तापरिच्छिन्नं मूर्तामूर्तलक्षणं ब्रह्मणो रूपं तत्प्रतिषेधति नेति शब्द इति व्याख्यानं सूत्राक्षराननुगुणमेव । रूपप्रतिषेधस्य विवक्षितत्वे प्रकृतैतावद्धि प्रतिषेधतीति ह्युच्येत, न तु तथोक्तम्, अपि तु 'एतावत्त्वं प्रतिषेधति' इति । अतः सूत्राक्षराननुगुणत्वं स्पष्टम् ।

एवं यथा महता परिकरबन्धेनोपदिष्टस्य ब्रह्मणः प्रतिषेधः 'प्रक्षालनाद्धि' इति न्यायेनानुपपन्न इति 'नेति नेति' इत्यस्य तत्प्रतिषेधपरत्वं निराकृतम्, तथा "द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तं च," "यः पृथिव्यां तिष्ठन् यस्य पृथिवी

शरीरं योऽप्सु तिष्ठन् यस्यापः शरीरं यस्तेजासि तिष्ठन् यस्य तेजः शरीरम्" "यस्य पृथीवी शरीरं यः पृथिवीमन्तरे संचरन् यस्यापः शरीरं योऽपामन्तरे संचरन् यस्य तेजः शरीरं यस्तेजसोऽन्तरे संचरन्" इत्यादिना महता प्रबन्धेन वेदान्तेषु प्रतिपादितस्य ब्रह्मणो मूर्तामूर्तशब्दितपृथिव्यादिप्रपञ्चेन रूपवत्त्वस्य मानान्तराप्राप्तत्वेनानुवादानर्हतया श्रुत्या विधित्सितत्वेनैवावश्याभ्युपगन्तव्यस्य तेनैव न्यायेन प्रतिषेधोप्यनुपपन्न इति तत्प्रतिषेधपरत्वमपि "नेति नेति" इत्यस्यानुपपन्नम्। अतः श्रुतिर्मूर्तामूर्तात्मक ब्रह्मरूपं प्रतिषेधतीति सूत्रार्थवर्णनमनुपपन्नं च। अतः पूर्वोक्त एव सूत्रार्थः।

"अथात आदेशो नेति नेति" इत्यत्रेयत्तैव प्रतिषिध्यते, न प्रकृताकार इति व्याकुर्वता सूत्रकारेण तुल्यन्यायेन "स एष नेति नेत्यात्मा" इत्यत्रापि 'इति न' इत्यस्य प्रकृताकार प्रतिषेधार्थकत्वं निषिद्धमेव। अतः "स एष नेति नेत्यात्मा" इत्यत्र 'इति न' इत्यस्योक्ताकारविशिष्टो नेति नार्थः, अपि तु स एष परमात्मा इति न एवंविधो नेत्यर्थः; इति शब्देन परिदृश्यमान प्रपञ्चाकारं परामृश्य परमात्मनस्तादृशाकारविशिष्टता प्रतिषिध्यते। तेन परमात्मनः प्रपञ्चविलक्षणत्वं प्रतिपादितं भवति। तदेव प्रपञ्चविलक्षणत्वमुत्तरवाक्येन स्पष्टीक्रियते—"अगृह्यो न हि गृह्यते" इत्यादिना। इन्द्रियग्राह्यविजातीयत्वादिन्द्रियैर्न गृह्यते; विशरणस्वभावप्रपञ्चविजातीयत्वान्न विशीर्यत इति तदर्थः।

यद्यपि "अथात आदेशो नेति नेति" इत्यत्र 'नेति नेति' इत्यस्येयत्तानिषेधार्थकत्वं सूत्रकारैरुक्तम्, तथापि प्रकृते प्रपञ्चवैजात्यप्रतिपादनपरोत्तरवाक्यसंदर्भपर्यालोचनायां "स एष नेति नेत्यात्मा" इत्यत्रेतिनेत्यस्य प्रपञ्चप्रकारनिषेधपरत्वमवसीयत इति तदर्थकत्वमेव युक्तम् । इत्थं च वाजसनेयकोक्तहार्दविद्याया निर्गुणविद्यात्वं दूरोत्सारितमिति विद्यैक्यमेवात्र परस्परगुणोपसंहारं वदद्भिः सूत्रकारैर्विवक्षितम् । इत्थं च छान्दोग्यवाजसनेयक गतहार्दविद्ययोरैक्यं सिद्धान्तयता सूत्रकृता वाजसनेयकोक्तहार्दविद्यानिष्ठस्य छान्दोग्योक्तोत्कान्तेरङ्गीकृतत्वात् तस्याप्युत्क्रान्ति प्रतिषेधोऽनुपपन्नः । नापि छान्दोग्यसप्तमप्रपाठकाम्नातभूम विद्यानिष्ठस्योत्क्रान्ति प्रतिषेधः, तत्प्रकरणे—"तदेष श्लोकः—

न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम् ।
सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः ॥

स एकधा त्रिधा भवति पञ्चधा
सप्तधा नवधा चैव पुनश्चैकादशःस्मृतः"

इत्यादिना तद्विद्यानिष्ठस्य मुक्तिदशायां सत्यसंकल्पत्व प्रयुक्तानेकशरीर परिग्रहस्याम्नाततया सत्यसंकल्पत्वाविर्भावस्य च प्रजापति विद्यायाम् "अस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" इत्यत्र शरीरान्निष्क्रम्य परज्योतिरुपसंपत्त्यनन्तरभावितायाः श्रुतत्वेन तद्विद्यानिष्ठस्यापि शरीरादुत्क्रान्ते रुक्तश्रुत्यर्थापत्तिसिद्धतया तस्याप्युत्क्रान्ति प्रतिषेधायोगात् ।

यत्तु भूमविद्याया निर्गुणविद्यात्वान्निर्गुणविद्यायाश्च ब्रह्मभावैकफलत्वात् "स एकधा भवति" इत्यादिना श्रुतमनेकशरीरपरिग्रहरूपमैश्वर्यं न तत्फलम्, परं तु भूमविद्यास्तुतये तत्प्रकरणे तदुक्तिरिति, तन्न; "स एकधा भवति" इत्यादेः स्तुतिमात्रत्वे फलपादे अभावाधिकरणे उक्तश्रुतिप्रमाणेनानेकशरीर परिग्रहलक्षणैश्वर्यस्य ब्रह्मविद्याफलत्व व्यवस्थापनासंगति प्रसङ्गात्। न च दहरादि सगुणविद्याफलेन तेन भूमविद्या स्तूयते; इत्थं च तस्य विद्याफलत्व व्यवस्थापनं सगुणविद्याभिप्रायमिति नोक्ताधिकरणासंगतिरिति वाच्यम्, तथापि तदधिकरणसिद्धान्तासंगतेर्दुर्वारत्वात्। तत्र हि मुक्तस्य शरीरमस्ति नवेति चिन्तायां "नहवै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति, अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः" इति मुक्तिदशायामशरीरत्वश्रवणात् नास्ति मुक्तस्य शरीरमिति बादरिमतम् "अभावं बादरिराह ह्येवम्" इति सूत्रेणाभिधायानन्तरं "स एकधा भवति त्रिधा भवति" इत्यादिना मुक्तस्यानेकधाभावश्रवणात् छेदनाद्यनर्हस्यात्मनोऽनेकधाभावस्य शरीरद्वारैव वक्तव्यत्वात् अस्त्येव शरीरमिति जैमिनेर्मतं "भावं जैमिनिर्विकल्पामननात्" इति सूत्रेणोक्त्वा इच्छायां सत्यां शरीरं गृह्णाति, इच्छाविरहे अशरीरस्तिष्ठतीति सिद्धान्तः "द्वादशाहवदुभयविधं बादरायणोऽतः" इति सूत्रेणोक्तः। तत्र यदि सगुणमुक्तिर्निर्गुणमुक्तिश्चेति मुक्तिर्द्विविधा, तत्र निर्गुणमुक्तिरशरीरत्वरूपा, सगुणमुक्तौ तु शरीरमस्तीत्युपनिषदामभिप्राय इति सूत्रकाराशयः स्यात्, तदा अशरीरत्वश्रुतिर्निर्गुणमुक्तविषया, सशरीर-

त्वश्रुतिः सगुणमुक्तविषयेति श्रुतिद्वयस्य विषयव्यवस्थया सिद्धान्तस्य सुवचतया सशरीरत्वाशरीरत्वयोरैच्छिकत्वेनोभयविधश्रुतिसंगमनं सूत्रकृतामनुचितं स्यात्। तस्मादेकविधैव मुक्तिः। तस्यां च सशरीरत्वाशरीरत्वश्रुत्योरैच्छिकशरीरतदभावविषयतयैवोपपत्तिर्वाच्या इत्येव सूत्रकाराशयः स्पष्टमवगम्यते।

अतोभूमविद्यानिष्ठस्याप्युक्तश्रुत्यर्थापत्त्या शरीरादुत्क्रान्तिसिद्धेर्न तस्याप्युत्क्रान्तिप्रतिषेधः संभवति। नापि कठवल्ल्युक्तविद्यानिष्ठस्य। तत्रापि तृतीयवल्ल्याम्—

"विज्ञानसारथिर्यस्तु मनः प्रग्रहवान्नरः।
सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्॥"

इति मन्त्रे तद्विद्यानिष्ठस्य वैष्णवपरमपदप्राप्त्यभिधानात् तत्पदप्राप्तेश्च देहादुत्क्रान्तिसाध्यतया तस्याप्युत्क्रान्तिसिद्धेः। एवं कठवल्ल्यन्ते—

"शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका।
तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति॥"

इति मन्त्रेण तद्विद्यानिष्ठस्य कण्ठत एव शताधिकनाड्योत्क्रान्त्यभिधानाच्च।

यत्तु चतुर्मुखलोकभाजां सगुणब्रह्मविदां मूर्धन्यनाड्योत्क्रान्तिर्लोकान्तरगतिश्चात्राभिधीयते, नतु निर्गुणब्रह्मविदः, तस्य "यदा सर्वे प्रमुच्यन्ते कामायेऽस्य हृदिश्रिताः। अथ मर्त्योऽमृतोभवत्यत्र ब्रह्मसमश्नुते॥" इति तत्पूर्वमन्त्रे

इहैव ब्रह्मप्राप्त्यभिधानादिति । तन्न ; "तयोर्ध्वमायन्नमृतत्वमेति" इति शताधिकनाड्या निष्क्रमणस्यामृतत्वशाब्दितापुनरावृत्तिलक्षणमोक्षसाधनत्व प्रतिपादनाच्चतुर्मुखलोकं प्राप्तस्य च "आब्रह्मभवनाल्लोकाः" इत्यादिना पुनरावृत्तिस्मरणादपुनरावृत्तिसाधनतया श्रुतस्य शताधिकनाडीनिष्क्रमणस्य चतुर्मुखलोकप्राप्तृविषयत्वायोगात् ।

यत्तु "तयोर्ध्वमायन्नमृतत्वमेति" इत्यत्रोच्यमानममृतत्वं नमोक्षः, अपि तु "आभूतसंप्लवं स्थानममृतत्वं हि भाष्यते" इति परिभाषितमापेक्षिकममृतत्वं चिरकालावस्थायित्वरूपमिति, तन्न, असति बाधके अमृतत्वशब्दस्य मुख्यार्थं परित्यज्य गौणार्थकल्पनस्यान्याय्यत्वात् ।

न च "यदा सर्वे प्रमुच्यन्ते" इति पूर्वमन्त्रे ब्रह्मविदोऽत्रैवामृतत्वप्राप्तिश्रवणेन तस्य गत्यभावसिद्धेरस्य मन्त्रस्य तद्विषयत्वासंभवेन चतुर्मुखलोक प्राप्तृविषयताया अवश्यवक्तव्यतया अमृतत्वशब्दस्य गौणामृतत्वार्थकत्वमवश्याश्रयणीयमिति वाच्यम् , "अथमर्त्योऽमृतो भवति" इति पूर्वमन्त्रे श्रुतस्यामृतत्वस्य गौणतायाः "समानाचासृत्युपक्रमादमृतत्वं चानुपोष्य" इति सूत्रे सूत्रकारैरुक्ततया तथाविधगौणामृतत्वश्रवणमात्रेण गमनाभावासिद्धेः । "तयोर्ध्वमायन्नमृतत्वमेति" इत्यत्र श्रुतस्यामृतत्वस्य अधिकार्यंतरविषयताया गौणताया श्चान्याय्यत्वात् ।

न चोक्तसूत्रे सूत्रकारैः "तयोर्ध्वमायन्नमृतत्वमेति" इत्यत्र श्रुतस्यैवामृतत्वस्य गौणत्वमुक्तम् , नतु "अथमर्त्यो-

ऽमृतो भवति" इत्यत्रोक्तस्यामृतत्वस्य। तत्र "वाङ्मनसि संपद्यते" इत्यादिना श्रुता भूताश्रयविशिष्टा उत्क्रान्तिः किमविदुषः सगुणब्रह्मविदश्च समाना, उत, विशेषवतीति संशये विदुषः "तयोर्ध्वमायन्नमृतत्वमेति" इति मोक्षप्राप्तिश्रवणेन पुनर्भवाभावसिद्धेः पुनर्भवार्था भूताश्रयविशिष्टोत्क्रान्तिर्नास्तीति पूर्वपक्षे "तयोर्ध्वमायन्नमृतत्वमेति" इति श्रुतस्यामृतत्वस्य चतुर्मुखलोके आभूतसंप्लवावस्थानरूप गौणामृतत्वरूपतया तत्प्राप्तये भूताश्रयविशिष्टोत्क्रान्तिः सगुणब्रह्मविदोऽप्यस्तीति हि सिद्धान्तितामिति वाच्यम्, "शतं चैका चे"ति श्रुत्युपबृंहण भूतया

"ऊर्ध्वमेकः स्थितस्तेषां यो भित्वा सूर्यमण्डलम्।
ब्रह्मलोकमतिक्रम्य तेन याति परां गतिम्॥"

इति स्मृत्या शताधिकनाड्या निष्क्रान्तस्य चतुर्मुखलोकमतिक्रम्य परगतिशब्दितमोक्षप्राप्तिमभिदधानया निरुक्तश्रुतिस्थामृतत्वशब्दस्य मोक्षपरतया विवृतत्वेन तद्विरोधप्रसङ्गेन सूत्रस्योदाहृतश्रुतिस्थामृतत्वशब्दस्य चतुर्मुखलोके चिरकालावस्थानरूपगौणार्थपरत्वाभिप्रायकल्पनायोगात्। तेषां पूर्वश्लोकोक्तानां रश्मीनां नाडीनामेकोऽन्यतमो यो रश्मिर्नाडी ऊर्ध्वं स्थितः तेन सुषुम्नाख्येन रश्मिना सूर्यमण्डलं भित्वा ब्रह्मलोकं चतुर्मुखलोकमतिक्रम्य परां गतिं मोक्षं यातीत्युक्तस्मृत्यर्थः। अत्र स्मृतौ सुषुम्नानाड्या निर्गतस्य चतुर्मुखलोकातिक्रमणोक्तिविरोधादपि "तयोर्ध्वमायन्नमृतत्वमेति" इत्यत्रामृतत्वशब्दस्य चतुर्मुखलोके चिरकालावस्थानरूपगौणामृतत्वपरत्वोक्त्यसंभवो द्रष्टव्यः।

इत्थं च "समानाचासृत्युपक्रमादमृतत्वं चानुपोष्य" इति सूत्रे "अथमर्त्योऽमृतो भवति" इत्यत्रत्यामृतशब्दस्यैव गौणामृतत्वपरतााया व्यवस्थापितत्वस्य वक्तव्यतया "तयोर्ध्वमायन्नमृतत्वमेति" इत्यत्र श्रुतममृतत्वं मोक्षरूपमेवेति तत्साधनतया श्रुतस्य शताधिकनाड्या निष्क्रमणस्य चतुर्मुखलोक प्राप्तृविषयत्वासंभवात् प्रकृतब्रह्मविद्यानिष्ठविषयत्वस्यैव वाच्यतया उक्तश्रुत्या ब्रह्मविद्यानिष्ठस्य देहादुत्क्रमणसिद्धेर्निष्प्रत्यूहतया तस्याप्युत्क्रान्तिप्रतिषेधो न संभवति। किं बहुना? अनियमाधिकरणे सूत्रकारैः सर्वेषामेव ब्रह्मविद्यानिष्ठानामर्चिरादिगतेर्व्यवस्थापिततया "स्पष्टो ह्येकेषाम्" इति सूत्रस्य ब्रह्मवित्सु केषांचिदुत्क्रान्तिप्रतिषेधकत्वमनुपपन्नमेव। तत्र हि कासुचिद्ब्रह्मविद्यासु अर्चिरादिगतिः श्रूयते, कासुचिन्न। ततश्चार्चिरादिगतिः सर्वब्रह्मविद्यासाधारणी न वेति संशये यस्यां ब्रह्मविद्यायामर्चिरादिगतिः श्रुता तन्निष्ठानामेव तया गतिः, नान्येषाम्, मानाभावादिति पूर्वपक्षे प्राप्ते "अनियमः सर्वेषाम्" इति सूत्रेण सिद्धान्त उक्तः। सर्वेषां ब्रह्मविदामर्चिरादिनैव गन्तव्यतया यत्रार्चिरादिगतिः श्रुता तन्निष्ठानामेव सेति नियमो नास्ति, तथा सत्येव शब्दानुमानाभ्यां श्रुतिस्मृतिभ्यामविरोधः; अन्यथा तद्विरोध एव स्यादिति सूत्रार्थः।

अयं भावः—पञ्चाग्निविद्याप्रकरणे "तद्य इत्थं विदुर्येचामी अरण्ये श्रद्धां सत्यमुपासते तेऽर्चिषमभिसंभवन्ति" इत्यादिना पञ्चाग्निविदामन्येषां च ब्रह्मविदामर्चिरादिगतिः

श्रूयते। तत्=पूर्वप्रकृतमात्मस्वरूपम्; इत्थम्=अचिद्विविक्ततया ये विदुः उपासते ये चान्ये अमी अरण्ये श्रद्धां पुरस्कृत्य सत्यं परं ब्रह्मोपासते ते उभयेऽपि अर्चिषमेवाभिसंभवन्ति प्राप्नुवन्तीति तदर्थः। अत्र एवकारेण पितृयानगतिर्व्यवच्छिद्यते। एवम्

"य एवमेनं जानन्ति ये चारण्यकमाश्रिताः।
उपासते तपः सत्यं श्रद्धया परया युताः।
क्रमात्ते संभवन्त्यर्चिरहःशुक्लं तथोत्तरम्॥"

इत्यादिना तेषामुभयेषामर्चिरादिगतिः स्मर्यते च। ततश्चार्चिरादिगतिर्यदि व्यवस्थिता स्यात् तर्ह्युक्तश्रुतिस्मृतिविरोधः स्यात्। अतोर्चिरादिगतिः सर्वब्रह्मविद्यासाधारणीति।

यत्तु उक्तसूत्रे सगुणब्रह्मविद्यानिष्ठानां सर्वेषामर्चिरादिगतिर्व्यवस्थापिता, न तु निर्गुणब्रह्मविदोऽपीति सूत्राभिप्रायवर्णनम्, तन्न; सूत्रस्थस्य सर्वेषामित्यस्य सगुणब्रह्मविद्यानिष्ठपरतया संकोचे मानाभावात्। सूत्रकारैः क्वचिदियं निर्गुणब्रह्मविद्या, एतन्निष्ठस्य नार्चिरादिना गमनमिति स्फुटं व्यवस्थापितत्वे उक्तसूत्रस्थस्य सर्वेषामित्यस्य सगुणविद्यानिष्ठपरतया संकोचो युज्येत, नतु क्वचित् तथा व्यवस्थापनं पश्यामः। "स्पष्टो ह्येकेषाम्" इति निर्गुणब्रह्मविद उत्क्रान्तिप्रतिषेधादेव संकोचकल्पने पुनरन्योन्याश्रयः। तत्सूत्रस्य ब्रह्मवित्सु केषांचिदुत्क्रान्तिप्रतिषेधकत्वे सिद्धे अनियमसूत्रे

सर्वशब्दसंकोचसिद्धिः। सिद्धे तत्संकोचे उक्तसूत्रस्य केषांचिदुत्क्रान्तिप्रतिषेधकत्वसिद्धिरिति ।

तदेवं "स्पष्टो ह्येकेषाम्" इति सूत्रे पक्षविपरिवृत्तिद्योतकस्य कस्याप्यभावात्, प्रत्युत, हिशब्देन पूर्वोक्तार्थदृढीकरणपरत्वस्यैव स्वरसतः प्रतीत्या, "प्रतिषेधादिति चेन्न, शारीरात्" इत्यनेनोक्तस्यैवार्थस्य दृढीकरणमनेन क्रियत इत्यवगमात्, "न तस्य प्राणा उत्क्रामन्ति" इत्यस्यार्तभागप्रश्नप्रतिवचनैकार्थ्येन शरीरादुत्क्रान्तिप्रतिषेधपरत्वपक्षे बहुतरदोषप्रसङ्गात्, "न तस्मात् प्राणा उत्क्रामन्ति" इति समानप्रकरणस्थ वाक्यान्तरैकार्थ्येन शारीरादुत्क्रान्ति प्रतिषेधपरत्वपक्षे दोषलेशासंस्पर्शाच्च, शरीरादुत्क्रान्ति प्रतिषेधपक्षस्य पूर्वपक्षतायाः शारीरादुत्क्रान्ति प्रतिषेधपक्षस्य सिद्धान्तपक्षताया एव च युक्ततया, तयोर्व्यत्ययाश्रयणस्यायुक्तत्वात्, "समाना चासृत्युपक्रमात्" इति सूत्रे सूत्रकारैरेवाविदुष इव विदुषोऽप्युत्क्रान्तेः सिद्धान्तितत्वेन तद्विरोधप्रसङ्गात्, "गतेरर्थवत्त्वमुभयथान्यथा हि विरोधः" इति सूत्रस्य निर्गुणब्रह्मविदि वैयर्थ्यात् गतिर्नेति व्याख्यानस्य बहुतरदोषदुष्टतायास्तत्सूत्रस्यार्थान्तरपरतायाश्च प्रागेव सुष्ठु निरूपितत्वात्, निर्गुणविद्यात्वेन पराभिमतविद्यानिष्ठानामप्युत्क्रान्ते रर्चिरादिगतेश्च तत्तच्छ्रुति सूत्र सिद्धतायाः प्रदर्शितत्वेन कस्यापि ब्रह्मविद उत्क्रान्ति प्रतिषेधासंभवात्, अनियमसूत्रे सर्वेषां ब्रह्मविदामर्चिरादिगते र्व्यवस्थापितत्वेन तद्विरोधाच्च, "स्पष्टो ह्येकेषाम्" इत्यस्य ब्रह्मविदो देहादुत्क्रान्ति प्रतिषेधपरतया व्याख्यानमनुपपन्नमिति प्रागुक्त एव तत्सूत्रार्थः।

तत् सिद्धमासृत्युपक्रमाधिकरणे ब्रह्मविदस्तादितरस्य च नाडीप्रवेशात् प्रागुत्क्रान्तिप्रकारोऽविशिष्ट इत्यभिधाय विदुष उत्क्रान्तिप्रतिषेधशङ्का च परिहृतेति; । "तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया" इत्यस्मिन् सूत्रे विदुषः शताधिकया मूर्धन्यनाड्यैव निर्गमनमिति विदुषो विशेषो दर्शितः । विद्वान् ब्रह्मवित् विद्यासामर्थ्यात् तस्या विद्यायाः शेषभूतोऽङ्गभूतो यो गत्यनुस्मृतिरूपोऽर्चिरादिगतिचिन्तनरूपो योगः तस्माच्च प्रसन्नेन हार्देन हृदयाकाशस्थितेन परमपुरुषेणानुगृहीतो भवति । ततश्च तस्य विदुष ओकः स्थानं हृदयमग्रे ज्वलनं दीप्तिर्यस्य तथाभूतं भवति तेन हार्दानुग्रहजनितस्फुरणेन प्रकाशितं द्वारं सुषुम्नाख्यमूर्धन्यनाडीद्वारं यस्य तथाभूतः सन् शताधिकया नाड्या शरीरान्निष्क्रामतीति सूत्रार्थः। नाडीनामतिसूक्ष्मतया स्वतो दुर्विवेचत्वेऽपि परमपुरुषाराधनरूपतया स्वानुष्ठितब्रह्मविद्यया प्रीतस्य हार्दपरमपुरुषस्यानुग्रहेणोपासकाधिष्ठानभूत हृदयस्याग्रे स्फुरणं भवति । तेन स्फुरणेन प्रकाशितेन मूर्धन्यनाडीद्वारेणायं विद्वान् देहान्निर्गच्छतीति सूत्राशयः। "तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति" इति श्रुतिरत्र विवक्षिता ।

एवं मूर्धन्यनाड्या निष्क्रान्तस्य विदुषोऽर्चिरादिनैव मार्गेण प्रस्थानमित्यार्चिराद्यधिकरणे व्यवस्थापितम् । तथाच सूत्रम्—"अर्चिरादिना तत्प्रथितेः" इति । अर्चिरादिना एकेनैव मार्गेण ब्रह्मविदां गमनम् , तत्प्रथितेः सर्वासूपनिषत्सु

तस्यैव प्रत्यभिज्ञानादिति सूत्रार्थः। अर्चिरादयश्च मार्गगमयितारोऽग्न्याद्यभिमानिदेवताविशेषाः इत्यातिवाहिकाधिकरणे "आतिवाहिकास्तल्लिङ्गात्" इति सूत्रेण स्थापितम्। अर्चिरादय आतिवाहिकाः मार्गगमयितारः, तल्लिङ्गात् मार्गगमयितृत्वज्ञापकात् अयमर्थो ज्ञायत इति सूत्रार्थः। अर्चिरादिष्वन्तिमस्यामानवस्य "तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति" इति मार्गगमयितृत्वश्रवणात् अन्येषामर्चिरादीनामपि मार्गे गमयितृत्वमेव संबन्ध इति ज्ञायत इति भावः। "वैद्युतेनैव ततस्तच्छ्रुतेः" इति सूत्रेणामानवस्यैव साक्षात् ब्रह्मगमयितृत्वं स्थापितम्। ततो वैद्युतादुपरि वैद्युतेनैवातिवाहिकेनाब्रह्मप्राप्तेर्गमनम्, "तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति" इत्यत्र तस्यार्थस्य श्रवणादिति सूत्रार्थः। एवमर्चिरादिना प्रस्थितस्य ब्रह्मविदश्चतुर्मुखलोक प्राप्तिपक्षं प्रतिक्षिप्य परब्रह्मप्राप्तिः कार्याधिकरणे सिद्धान्तिता।

तथाहि—"स एनान् ब्रह्मगमयति" इत्यत्रामानव उपासकान् ब्रह्म प्रापयतीत्युक्तम्। तत्रैवं संशयः—अर्चिरादिरमानवान्त आतिवाहिकगणः किं कार्यं हिरण्यगर्भमुपासीनान् नयति? अथवा परं ब्रह्मोपासीनानेव? अथवा परं ब्रह्मोपासीनान् प्रकृतिवियुक्तस्वात्मानं ब्रह्मात्मकतयोपासीनांश्चेति। तत्र बादरिमतं तावदाह—"कार्यं बादरिरस्य गत्युपपत्तेः" इत्यादिभिः पञ्चभिः सूत्रैः। कार्यमिति अत्र विषयवाक्ये 'एनान्' इत्युपासितॄणां प्रतिपन्नत्वात्। सूत्रे 'उपासीनम्' इत्यध्याहार्यम्। अप्रतीकालम्बनान्नयतीति

सिद्धान्तसूत्रात् नयतीत्याकर्षणीयम् । ततश्च कार्यं हिरण्यगर्भमुपासीनमर्चिरादिरातिवाहिको गणो नयतीति बादरिर्मन्यते । तत्र हेतुमाह—अस्य गत्युपपत्तेरिति । अस्य कार्यभूतहिरण्यगर्भोपासकस्य गत्युपपत्तेः=स्वप्राप्यप्राप्तये गमनोपपत्तेरिति सूत्रार्थः । अयं भावः—परस्य ब्रह्मणः सर्वव्याप्तत्वेन तस्य नित्यप्राप्ततया तदुपासकस्य तत्प्राप्तये न देशान्तरगमनमुपपद्यते । हिरण्यगर्भस्य तु परिच्छिन्नदेश विशेषवर्तितया तदुपासकस्य तत्प्राप्तये गमनमुपपद्यते । अतो हिरण्यगर्भाख्यकार्यब्रह्मोपासकानेव नयतीति । हेत्वन्तरमाह—“विशेषितत्वाच्च” इति । विशेषितत्वात् अर्चिरादिना प्राप्यस्य परस्मात् ब्रह्मणो व्यावर्तितत्वाच्च कार्यमुपासीनमेव नयतीति गम्यत इति सूत्रार्थः ।

अयं भावः—“तत्पुरुषोऽमानवः स एत्य ब्रह्मलोकान् गमयति” इति श्रूयते । तत्र ब्रह्मलोकानित्यस्य “एष ब्रह्मलोकः सम्राडिति होवाच” इत्यादाविव ब्रह्मैव लोको ब्रह्मलोक इति कर्मधारयेण परब्रह्मपरत्वं न युक्तम्; लोकानिति बहुवचनश्रवणाविरोधात् । अतो ब्रह्मणो लोका इति षष्ठीसमास एवाश्रयणीयः । न च परस्य ब्रह्मणोऽसाधारणलोकविशेषः प्रामाणिकः, प्रामाणिकश्च हिरण्यगर्भस्यैव । अतोऽत्रामानवस्य कार्यभूतहिरण्यगर्भलोकप्रापकत्वश्रवणेनामानवप्रापणीयं तत्स्थं कार्यभूतं हिरण्यगर्भाख्यं ब्रह्मेति ज्ञायते । एवं “प्रजापतेः सभां वेश्म प्रपद्ये” इत्यर्चिरादिना प्रस्थितस्य प्रजापतिशब्दितचतुर्मुखसभावेश्मप्राप्त्यभिसन्धि-

श्रवणादप्ययमर्थो ज्ञायते । अतोऽमानवः कार्यं हिरण्यगर्भमुपासीनमेव गमयतीति ।

नन्वेवं "सएनान् ब्रह्म गमयति" इति व्यपदेशो नोपपद्यते, ब्रह्माणं गमयतीति हि तदा व्यपदेष्टव्यम्, पुंलिङ्गब्रह्मशब्दस्यैव हिरण्यगर्भवाचित्वादित्याशङ्कायामाह—"सामीप्यात्तु तद्व्यपदेशः" इति । सामीप्यात् प्रथमजत्वेन हिरण्यगर्भस्य परब्रह्मसंनिहितत्वात् तद्व्यपदेशः नपुंसकब्रह्मशब्देन व्यपदेशः ब्रह्मकार्यत्वात् ब्रह्मेति निर्देश इत्यर्थः, कार्ये कारणोपचार इति भावः । नन्वेवमप्यर्चिरादिना प्रस्थितानां हिरण्यगर्भप्राप्तिपक्षे तेषां "शतं चैकाच हृदयस्य नाड्यस्तासां मूर्धानमभिनिः सृतैका । तयोर्ध्वमायन्नमृतत्वमेति" इति "स एनान् ब्रह्म गमयत्येष देवपथो ब्रह्मपथ एतेन पथा प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते" इति चामृतत्वप्राप्त्यपुनरावृत्त्योः श्रवणं विरुध्यते, कार्यभूतस्य हिरण्यगर्भलोकस्य महाप्रलये नाशस्यावर्जनीयतया तल्लोकं प्राप्तानां पुनरावृत्तेरावश्यकत्वात् । "आब्रह्मभवनाल्लोकाः पुनरावर्तिनोऽर्जुन" इत्यादिषु चतुर्मुखलोकं प्राप्तानां पुनरावृत्त्यभिधानाच्च तेषाममृतत्वापुनरावृत्त्योरसंभवादित्याशङ्कां परिहरति—"कार्यात्यये तदध्यक्षेण सहातः परमभिधानात्" इति । कार्यस्य हिरण्यगर्भलोकस्यात्यये नाशे सति तदध्यक्षेण हिरण्यगर्भेण सह तत्राधिगतविद्यः सन् अतः कार्यभूत हिरण्यगर्भलोकात् परं ब्रह्म प्राप्नोति, अर्चिरादिना हिरण्यगर्भं प्रापितः पुरुष इति शेषः । "ते ब्रह्मलोके तु परान्त-

काले परामृतात् परिमुच्यन्ति सर्वे" इत्यभिधानादयमर्थोऽवगम्यत इति सूत्रार्थः। ब्रह्मलोके चतुर्मुखलोके स्थिताः सर्वे ते यतयस्तु परान्तकाले परस्य ब्रह्मायुषोऽन्तकालेऽवसानवेलायां परामृतात् परममृतं प्राप्येति ल्यब्लोपे पञ्चमी। परिमुच्यन्ति मुक्ता भवन्तीति श्रुत्यर्थ इति पूर्वपक्षिणोऽभिप्रायः। उक्तश्रुतौ तत्राधिगतविद्या इत्यस्याश्रुतत्वात्तल्लाभाय स्मृतिवचनमप्युक्तार्थे प्रमाणमाह—"स्मृतेश्च" इति। "ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे। परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्॥" इति स्मृतेश्चायमर्थोऽवगम्यत इति सूत्रार्थः। ते सर्वे चतुर्मुखलोकं प्राप्ताः सर्वे कृतात्मानः तत्राधिगतपरविद्याः सन्तः परस्य चतुर्मुखायुषोऽन्तेऽवसानकाले प्रतिसंचरे महाप्रलये संप्राप्ते सति परं पदं परमात्मस्वरूपं प्रविशन्तीत्युक्तस्मृतिवचनार्थः पूर्वपक्षिणोऽभिमतः। तदेवं पञ्चसूत्र्या बादरिपक्षो दर्शितः।

तत्र प्रथमसूत्रेऽर्चिरादिमार्गगामिनश्चतुर्मुखप्राप्तिपक्षे गत्युपपत्त्युपन्यासेन परब्रह्मप्राप्तिपक्षे गत्यनुपपत्तिरुद्धाटिता। तस्याः प्रथममुद्धाटनेन ब्रह्मशब्दमुख्यवृत्त्यनुरोधेन परब्रह्मप्राप्तिस्वीकारपक्षप्रतिक्षेपे तस्याः प्रबलहेतुत्वं प्रधानहेतुत्वं चाभिमतमिति गम्यते। द्वितीयसूत्रे "ब्रह्मलोकान् गमयति" "प्रजापतेः सभां वेश्म प्रपद्ये" इत्यादिश्रुतिषु अर्चिरादिना प्रस्थितस्य चतुर्मुखलोकतत्सभावेश्मादिप्राप्तिप्रतिपादनरूपस्वपक्षसाधकहेतुरुक्तः। तृतीयसूत्रे स्वपक्षे गतिशास्त्रेषु परब्रह्ममुख्यवृत्तनपुंसकब्रह्मशब्देन प्राप्यनिर्देशानुपपत्तिः परि-

हृता। चतुर्थपञ्चमसूत्राभ्यां स्वपक्षेऽर्चिरादिना गतस्यामृतत्वप्राप्त्यपुनरावृत्तिश्रुत्यनुपपत्तिरूपमनुपपत्त्यन्तरं परिहृतम् । अत्र प्रथमसूत्रे परपक्षे इत्थमनुपपत्तिरभिप्रेता—अप्राप्तस्य वस्तुनः प्राप्त्यर्थं हि कचिद्गमनम् । सर्वगतस्य ब्रह्मणो नित्यप्राप्तत्वादेव न तत्प्राप्तये कचिद्गमनमुपपद्यते। ब्रह्मविद्यापि न ब्रह्मप्राप्त्यर्था, अपि तु अविद्यानिवृत्त्यर्था। तस्याश्चाविद्यानिवृत्तेरिहैव संभवात् "सोऽविद्याग्रन्थिं विकिरतीह सोम्य" इति इहैवाविद्यानिवृत्तिश्रवणात् "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥" इत्यादिष्वविद्याग्रन्थिभेदस्य ब्रह्मसाक्षात्कारमात्रसाध्यत्वाभिधानाच्च न तदर्थमपि कचिद्गमनमपेक्षितम् । अतः परब्रह्मप्राप्तिपक्षे गतिशास्त्रानुपपत्तिरिति । स्वपक्षे गत्युपपत्तिश्चैवमभिप्रेता—शास्त्रेषु चतुर्मुखस्य सत्याख्यलोक विशेषेऽवस्थितत्वाभिधानात् परिच्छिन्नदेशविशेषवर्तिनस्तस्य प्राप्तये गमनोपपत्त्या गतिशास्त्रोपपत्तिरिति । इत्थं परपक्षेऽनुपपत्तिं स्वपक्षे उपपत्तिं च वदतो बादरेराचार्यस्यायमाशयोऽवगम्यते—परब्रह्मस्वरूपप्राप्तिः न परविद्याफलम्, तस्य सर्वगतत्वेन सर्वदा प्रप्तत्वात् । नापि लोकविशेषे शरीर विशेषावच्छिन्न परब्रह्मप्राप्तिः जक्षणक्रीडनादि स्वेच्छाविहारसिद्धिपर्यन्ता तत्फलम्, लोकविशेषशरीरविशेषादेः संनिवेश विशेषरूपतया कदाचिदपि वा तन्नाशस्यावर्जनीयत्वेन परविद्याफलस्य मोक्षरूपनित्यपुरुषार्थता वादि सर्वशास्त्रव्याकोप प्रसङ्गात्, परविद्याफलस्य संसारादविशेषप्रसङ्गाच्च । अपि तु भ्रान्ति विशेषरूपाविद्यानिवृत्तिरेव तत्फलम् ।

भ्रान्तेश्च तत्त्वज्ज्ञानबाध्यतयोत्पन्नतत्त्वसाक्षात्कारस्य ब्रह्मविदः स्वदेश एव भ्रान्तिनिवृत्तिसंभवेन न तदर्थं कचित् गमनमपेक्षितम्। अतो गतिशास्त्रं न परविद्याविषयम्, किं त्वपरविद्याविषयम्, हिरण्यगर्भप्राप्तिरूपस्य तत्फलस्य गति साध्यत्वादिति। ततश्च परविद्याफलस्वरूपानिरूपणासिद्धपर ब्रह्मप्राप्तिपक्षीयगत्यनुपपत्ति सहकृतचतुर्मुखप्राप्तिपक्षीयगत्युपपति रूपलिङ्गस्य स्वपक्षसाधकत्वपरं प्रथमसूत्रम्। द्वितीयसूत्रे "विशेषितत्वाच्च" इत्यर्चिरादिमार्गप्राप्यस्य विशेषितत्वं वदतोऽयमभिप्रायः—"तत्पुरुषोऽमानवः स एत्य ब्रह्मलोकान् गमयति" इत्यर्चिरादिमार्ग प्राप्याभिधायिश्रुतौ बहुवचनान्त ब्रह्मलोकशब्दस्य निषादस्थपति न्यायेन ब्रह्मैव लोको ब्रह्म लोक इति कर्मधारयाश्रयणेन परब्रह्मपरत्वं न संभवदुक्तिकम्, बहुवचनविरोधात्। समानप्रकरणे "पुरुषोऽमानव एत्य ब्रह्मलोकान् गमयति तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति" इति बृहदारण्यक श्रुतौ अर्चिरादिनेय ब्रह्मलोकस्य तन्नीतपुरुषवासस्थानत्वोक्ति विरोधाच्च। अतः षष्ठीसमास एवा श्रयणीयः।

तत्र च ब्रह्मशब्दस्य चतुर्मुख परब्रह्मोभयसाधारण्येऽपि परब्रह्मणोऽसाधारण लोकस्या प्रामाणिकत्वात् समानप्रकरणे "प्रजापतेः सभां वेश्म प्रपद्ये इत्यर्चिरादिमार्गगाम्यभिसंधिश्रुतौ चतुर्मुखरूढप्रजापतिशब्दघटितायां चतुर्मुखसभा वेश्मप्राप्तेः स्पष्टमेव प्रतिपादिततया तदैकार्थ्याच्च चतुर्मुखपरत्वमेव युक्तम्। इत्थं चार्चिरादिमार्गगन्तुरुक्त

श्रुतिद्वयेन चतुर्मुखलोकतत्सभावेश्मादिकमेव प्राप्यं व्यप दिश्यत इति । ततश्च चतुर्मुखलोक प्राप्तिरूपलिङ्गेन स्वपक्षसाधनपरं द्वितीयसूत्रम् । एवमनन्यथासिद्ध निरुक्तलिङ्गद्वयेनार्चिरादिमार्गगामिनो हिरण्यगर्भप्राप्तौ निश्चितायां "सएनान् ब्रह्म गमयति।" इत्यस्य परब्रह्ममुख्यवृत्तनपुंसक ब्रह्म शब्दस्य गौणवृत्त्या निर्वाह्यत्व प्रदर्शनपरं तृतीयसूत्रम्। तत्र गौणवृत्तिं वदतोऽयमभिप्रायः—सति संभवे शब्दस्य मुख्यार्थो ग्राह्यः, न त्वसंभवेऽपि । प्रकृते चासंभवो दर्शितः । अतः प्रकृतब्रह्मशब्दो गौणवृत्त्यैव निर्वाह्य इति अर्चिरादिना गतानाममृतत्व प्राप्त्य पुनरावृत्तिश्रुत्योः श्रुत्यन्तरतदुपबृंहणस्मृत्यनुरोधेन क्रममुक्तिपरतया निर्वाह्यत्व प्रदर्शनपरे चतुर्थपञ्चमसूत्रे ।

अयमत्र बादरिपक्षनिर्गलितार्थः—अर्चिरादिरातिवाहिको गणोऽर्चिरादिना प्रस्थितान् परं ब्रह्म गमयतीति पक्षे सर्वगतत्वेन नित्यप्राप्तस्य परस्य ब्रह्मणो गन्तव्यत्वानुपपत्तेः समानप्रकरणे 'ब्रह्मलोकान् गमयति' इत्यत्र बहु वचनानुपपत्तेः संनिवेशविशेषविशिष्टभोगभूमि प्रसिद्धलोक शब्द सामञ्जस्यानुपपत्तेः "तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति" इति श्रुत्यन्तरोक्ताधिकरणाधिकरणि भावानुपपत्तेः लोकविशेषावच्छिन्नस्य परब्रह्मणः प्राप्यत्वोपगमे संनिवेश विशेषरूपस्य लोकस्य यदाकदाचिन्नाशस्यावर्जनीयतया परविद्याफलस्य नित्यत्वानुपपत्तेरर्चि रादिमार्गगामिनश्चतुर्मुखसभावेश्मप्राप्त्यभिसंध्यनुपपत्ते श्चातिवाहिक गणः परं ब्रह्म गमयतीति पक्षो न

युक्तः। हिरण्यगर्भं प्रापयतीति पक्षे तु परिच्छिन्नदेशवर्तिनो हिरण्यगर्भस्य गन्तव्यत्वोपपत्तेः बहुवचनान्तलोकशब्द सामञ्जस्योपपत्तेः तल्लोकस्याधिकरणत्वोपपत्तेः चतुर्मुखसभावेऽमप्राप्तेः विशिष्य श्रवणादर्चिरादिमार्गगामि प्राप्यवाचिनपुंसक ब्रह्मशब्दस्य गौणवृत्त्या चतुर्मुखपरत्व संभवादर्चिरादिना प्रस्थितानाममृतत्व प्राप्त्यपुनरावृत्तिश्रुतेः क्रममुक्तिपरतयोपपत्तेश्च तत्पक्ष एव युक्तः इति। अत्र जैमिनिः प्रत्यवतिष्ठते—"परं जैमिनिर्मुख्यत्वात्" इत्यादिना सूत्रत्रयेण। मुख्यत्वात् नपुंसकब्रह्मशब्दस्य परस्मिन्नेव ब्रह्मणि मुख्यवृत्तत्वात् परं ब्रह्मोपासीनानेवातिवाहिको गणो नयतीति जैमिनिराचार्यो मन्यते इति सूत्रार्थः।

अयं भावः—"स एनान् ब्रह्म गमयति" इत्यत्र गमयितव्यवाचिनो नपुंसकस्य ब्रह्मशब्दस्य परस्मिन् ब्रह्मणि मुख्यवृत्ततया मुख्यार्थं परित्यज्य लक्षणया तस्य चतुर्मुखपरत्वकल्पनमयुक्तम्, लक्षणायां माना भावात्। नच परस्य ब्रह्मणः सर्वगतस्य गन्तव्यत्वानुपपत्तिस्तत्र मानम्, देश विशेषविशिष्टस्य तस्य गन्तव्यत्वोपपत्तेः। नापि समानप्रकरणे "ब्रह्मलोकान् गमयति" इत्यत्र गन्तव्यपरस्य ब्रह्मलोकशब्दस्य बहुवचनान्तस्यानुपपत्तिस्तत्र मानम्, "एषब्रह्मलोकः सम्राडिति होवाच अह रहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दति" इत्यादाविव प्रकृतेऽपि ब्रह्मलोकशब्दस्य निषादस्थपति न्यायेन समानाधिकरणसमासस्यैव युक्ततया प्रधानभूत प्रकृत्यर्थे न्यायेन निश्चिते तदनुरोधोनाप्रधानभूत बहुवचन

प्रत्ययस्य "अदितिः पाशान् प्रमुमोक्तु" इत्यत्र पाशपदोत्तर-बहुवचनस्येव नेयत्वात्। अस्तु वा 'ब्रह्मलोकान्' इत्यत्र षष्ठी समास एव। परस्य ब्रह्मणः स्वेच्छाकल्पिताप्राकृताकाल-काल्यलोकविशेषाणां श्रुतीतिहासपुराणादिभिरनन्यथासिद्धैः प्रतिपन्नत्वात्। तथाहि—छान्दोग्येऽष्टम प्रपाठके पञ्चमखण्डे श्रूयते— "अरश्चह वैण्यश्चार्णवौ ब्रह्मलोके तृतीयस्यामितो दिवि, तदैरंमदीयं सरः, तदश्वत्थः सोमसवनस्तदपराजिता पूर्ब्रह्मणः प्रभुविमितं हिरण्मयमि"ति। अत्र परस्य ब्रह्मणो लोकविशेष पुरविशेषादिकं प्रतिपादितम्। न चात्र ब्रह्मण इत्यस्य चतुर्मुखपरत्वेनान्यथासिद्धिःसुवचा, परस्यैव ब्रह्मणः प्रकृतत्वेना प्रकृतचतुर्मुखपरत्वस्य दुर्वचत्वात्। अत्र हि प्रक-रणे पूर्वत्र तृतीयखण्डे "यएष संप्रासादोऽस्माच्छरीरात् समु-त्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते एष आत्मेति होवाच एतदमृतमेतदभयमेतद्ब्रह्मे"ति शरीरादुत्क्रा-न्तस्य विदुषः परज्योति रुपसंसत्त्या स्वरूपाविर्भावमभिधा-योपसंपत्तव्यं परं ज्योति श्चामृतत्वाभयत्वादि गुणकं परं ब्रह्मेति स्फुटीकृत्य "तस्य हवा एतस्य ब्रह्मणो नामसत्यमिति" इत्यादिना सत्यनामनिर्वचनेन तस्य चेतना चेतन नियन्तृ-त्वमभिधाय चतुर्थखण्डे "अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसंभेदाय नैनं सेतु महो रात्रे तरतो न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्त-न्तेऽपहतपाप्मा ह्येष ब्रह्मलोक' इत्यन्तेन तस्यैव सर्व लो-कसेतुत्व विधरणत्वाहोरात्र परिच्छेदरहितत्वकर्मफलाश्लिष्टत्वा द्यभिधाय तदुपपादकतया तस्य स्वतोऽपहतपाप्मत्वं च प्रति-

पाद्य "तस्माद्वा एतं सेतुं तीर्त्वान्धः सन्ननन्धो भवति" इत्यादिना "एतं सेतुं तीर्त्वाऽपिनक्त महरेवाभि निष्पद्यते" इत्यन्तेन तत्प्राप्तस्य सकलक्लेशानिवृत्तिं नित्यासंकुचितज्ञानत्वं चाभिधाय "तद्य एवैतं ब्रह्मलोकं ब्रह्मचर्येणानुविन्दन्ति तेषामेवैष ब्रह्मलोकः" इत्यनेन ब्रह्मचर्य पूर्वकमाचार्योपदेशादिना जानतामेवेदृशब्रह्मप्राप्तिरित्युक्त्वा यज्ञेष्टसत्रायणमौनानाशकायनारण्यायनाख्यानि कर्माणि ब्रह्मचर्यमेवेति प्रकृतब्रह्मप्राप्तिसाधनब्रह्मचर्यस्तुति प्रसङ्गाद्धीदमभिहितम्—"अरश्च हवैण्यश्च" इत्यादि। नहीदं प्रकरणं चतुर्मुखपरतया योजयितुं शक्यम्, नपुंसकब्रह्मशब्द विरोधात् अमृतत्वाभयत्व सकल चेतना चेतननियन्तृत्वसेतुत्वविधरणत्वादीनां तस्मिन्नसंभवात्। "निजेन तस्य मानेन आयुर्वर्षशतं स्मृतम्। आब्रह्मस्तम्बपर्यन्ता जगदन्तर्व्यवस्थिताः। प्राणिनः कर्मजनितसंसारवशवार्तिनः॥" इत्यादिभिः परिमितकालवर्तित्वकर्मवश्यत्वादिना प्रतिपन्नस्य तस्याहोरात्रपरिच्छेदाभाव कर्मफलाश्लिष्टत्वाद्यसंभवाच्च प्रकरणस्य तत्परतायाः शङ्कितुमप्यनर्हत्वात्।

उक्तश्रुत्यर्थस्तु इतः अस्मान्मनुष्यलोकात् तृतीयस्यां मनुष्यलोकः अन्तरिक्षलोकः द्युलोक इति लोकगणनायां तृतीयस्यां दिवि द्युलोकात्मके ब्रह्मलोके परब्रह्मणोऽसाधारणे लोके अरश्चण्यश्चेति संज्ञितावर्णवौ जलाशयौ स्तः, तत् तत्र ऐरंमदीयं नाम सरः अस्ति, तत् तत्र सोमसवनाख्यः अश्वत्थः अस्ति, तत् तत्र अपराजिताख्या ब्रह्मणः परस्य

पूः पुरी अस्ति। तत्रेत्यध्याहार्यम्। प्रभुविमितं प्रभुणा परब्रह्मणा भगवता विमितमधिष्ठितं हिरण्मयं हिरण्यवत् स्पृहणीयमायतनमस्तीति शेषः। अत्र परस्य ब्रह्मणो लोकविशेषो ह्रदसरोवृक्षादिविशिष्टोऽस्तीति पुरविशेषः आयतन विशेषश्चास्तीति परं ब्रह्म तदधितिष्ठतीति च सिद्धम्। अधिष्ठानोक्त्या शरीरविशेषश्च सिद्धः। एवं कौषीतकिनामुपनिषदि चायमर्थः सिद्धः। तत्र हि प्रथमाध्याये "स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स आदित्यलोकं स इन्द्रलोकं स प्रजापति लोकं स ब्रह्मलोकं तस्य ह वा एतस्य ब्रह्मलोक स्यारो ह्रदो मुहूर्तायष्टिहा विरजानदी इल्वोवृक्षः सालज्यं स्थानमपराजित मायतनमिन्द्र प्रजापती द्वारगोपौ विभु प्रमितं विचक्षणासन्दी अमितौजाः पर्यङ्क" इत्युपक्रम्य तमित्थंविदागच्छतीति। तं ब्रह्मालं कारेणालं कुर्वन्ति स ब्रह्मालं कारेणालं कृतो ब्रह्म विद्वान् ब्रह्मैवाभिप्रैतीति। स एष विसुकृतो विदुष्कृतो ब्रह्म विद्वान् ब्रह्मैवाभि प्रैतीति चाभिधाय "स आगच्छत्यमितौजसं पर्यङ्कम्" इत्युपक्रम्य "तस्मिन् ब्रह्मास्ते तमित्थंवित्पादेनैवाग्र आरोहति" इत्याद्यभिहितम्। अत्रार्चिरादिना गतस्याग्निलोकादिप्रजापति लोकान्तलोकगमनमभिधाय तदुपरि गन्तव्यतयाभिहितो ब्रह्मलोकश्चतुर्मुखलोक इति न शक्यं वक्तुम्, प्रजापति लोकशब्दित चतुर्मुखलोकात् तस्य पृथगुक्तेः। न हि चतुर्मुखादन्यस्य कस्यचित् प्रजापति शब्दितस्यातिवाहिककोटौ प्रवेशोऽस्ति, येन प्रजापति लोकशब्दस्य तल्लोकपरतया निर्वाहः स्यात्। अतः प्रजापति लोकात् पृथगु-





क्तोऽयं ब्रह्मलोकः परब्रह्मलोक एव। अत एवाग्रे तल्लोकं प्राप्तस्य परब्रह्मप्राप्तिः "ब्रह्मविद्वान् ब्रह्मैवाभिप्रैति" इति द्विरुच्यते। न हि तत्र ब्रह्मशब्दस्य नपुंसकस्य चतुर्मुखपरता संभवति, तस्य तदवाचकत्वात्। नच लक्षणया तत्परता सुवचा, प्रक्रान्तस्य ब्रह्मणः "तस्मिन् ब्रह्मास्ते" इत्यग्रेतनवाक्ये पर्यङ्क विशेषस्थित्यभिधानेन पर्यङ्कस्थितत्वविशिष्टस्य नपुंसकब्रह्मशब्दमुख्यार्थस्य गन्तव्यत्वेऽनुपपत्ति विरहेण लक्षणायां मानाभावात्। अतोऽनया कौषीतक्युपनिषदा परस्य ब्रह्मणोऽसाधारणह्रदनदी तटाकादिपरिष्कृतलोकविशेषादिव्यायतनदिव्यपर्यङ्कविशेषतदधिष्ठातृदिव्यमङ्गलविग्रहविशेषादिसिद्धिर्दुरपह्नवा। एवं श्रुत्यन्तरेषु इतिहासपुराणादिषु च तत्प्रपञ्चो द्रष्टव्यः। तदेव मर्चिरादिना मार्गेण गतस्य लोकविशेषस्थितायतनविशेषे शरीराविशेषेण पर्यङ्कविशेषमधितिष्ठतः परस्य ब्रह्मणः प्राप्तिमभिदधानयानया कौषीतक्युपनिषदा "स एनान् ब्रह्म गमयति" इत्यादिषु अचिरादिगति श्रुतिषु श्रुतममानवस्य ब्रह्मगमयितृत्वमुक्तपर्यङ्कविशेषावस्थितशरीर विशेषविशिष्टब्रह्मगमयितृत्वरूपमिति विवृतं भवति। इत्थमुक्तश्रुत्यर्थं विवृण्वत्यानयैव परस्य ब्रह्मणो गन्तव्यत्वानुपपत्तिबहुवचनान्तब्रह्मलोकशब्दानुपपत्तिलोकशब्द सामञ्जस्यानुपपत्त्याधिकरणाधिकरणिभावानुपपत्तिचतुष्टयं परिहृतं भवति। यापुनर्लोकविशेषे शरीरविशेषावच्छिन्न परब्रह्मप्राप्तेः परविद्याफलत्वे लोकविशेषशरीरविशेषयोः संनिवेशविशेषरूपयोः कदाचिदपि वा नाशस्यावर्जनीयतया परविद्याफलस्य नित्यत्वानुपपत्तिरुक्ता; तामपि "तान्

वैद्युतात् पुरुषोऽमानव एत्य ब्रह्मलोकान् गमयति तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति तेषां न पुनरावृत्तिः" इति बृहदारण्यकाष्टमाध्यायद्वितीयब्राह्मणस्था श्रुतिरेव प्रत्याचष्टे। तत्र हि अर्चिरादिना गता ब्रह्मविदोऽमानवेन ब्रह्मलोकान्नीयन्ते। तन्नीतास्ते तेषु लोकेषु वसन्ति। तत्र वसतां तेषां पुनरावृत्तिर्नास्तीत्यभिधीयते। यदि तल्लोकस्य नाशः स्यात्तर्हि तल्लोकवासिनां तल्लोकनाशदशायां पुनरावृत्तिरवर्जनीया। यथा चतुर्मुखलोकवासिनां द्विपरार्धावसाने तल्लोकनाशात् पुनरावृत्तिः। अतएव गीयते—"आब्रह्मभवनाल्लोकाः पुनरावर्तिनोऽर्जुन" इति। इह तूक्तलोकेषु वसतां पुनरावृत्तिः प्रतिषिध्यते। अतस्तल्लोकस्याविनाशित्वान्न पुनरावृत्तिरित्यै श्रुतेराशयोऽवगम्यते। न खलु स्थानानित्यत्वे स्थानिनां नित्यत्वमुपपद्यते। तदिदं भगवल्लोकस्य नित्यत्वं "तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः" इति श्रुत्यन्तरेणापि सिद्धम्। तत्र हि वैष्णवपरमपदस्य सूरिभिः सदा दृश्यमानत्वमुच्यमानं न तस्य नित्यत्वं विनोपपद्यते, स्थानस्यानित्यत्वे कदाचित् दर्शनविच्छेदप्रसङ्गात्। न चात्र पदशब्दस्य स्वरूपपरतयान्यथासिद्धिः शङ्क्या, विष्णोरिति षष्ठ्या स्वरसतो व्यतिरेकप्रतीतेः। तापनीयोपनिषदि "तद्वा एतत् परंधाम मन्त्रराजाध्यापकस्य यत्र न सूर्यस्तपति यत्र न वायुर्वाति यत्र न चन्द्रमाभाति यत्र न नक्षत्राणि भान्ति यत्र नाग्निर्दहति यत्र न मृत्युः प्रविशति यत्र न दुःखं सदानन्दं परमानन्दं शान्तं शाश्वतं सदाशिवं ब्रह्मादिवन्दितं योगिध्येयं परं पदं यत्र गत्वा न निवर्तन्ते योगिनः तदेतदृचाभ्युक्तं तद्विष्णोः

परमं पदं सदा पश्यन्ति सूरयः" इत्यत्र मन्त्रराजेन परमात्मोपासकस्य प्राप्यस्थानविशेषं प्रस्तुत्य सकलेतरव्यावृत्ततत्प्रभावं विवृत्य 'तदेतदृचाभ्युक्तम्' इति तथाविधस्थानविशेषविषयतयास्या ऋचोऽवतारितत्वाच्च नास्या दिव्यात्मस्वरूपपरतयान्यथाभिद्धिः सुवचा। श्रीमति वैष्णवे पुराणे—

"एकान्तिनः सदा ब्रह्म ध्यायिनो योगिनोऽहि ये।
तेषां तत्परमं स्थानं यद्वै पश्यन्ति सूरयः॥"

इत्युपबृंहणविरोधाच्च नास्य स्वरूपपरता युक्ता। उक्ततापनीयोपनिषदि 'शाश्वतम्' इति धाम्नो विशेषणमभिधाय 'यत्र गत्वा न निवर्तन्ते' इत्यभिधानात् तत्स्थानस्य नित्यत्वात् तत्प्राप्तानामपुनरावृत्तिरित्ययमर्थः स्पष्टीकृतः। महाभारते आरण्यपर्वणि द्विषष्ट्यधिकद्विशततमाध्याये चायमर्थः स्पष्टः। तत्र हि—"आब्रह्मभवनादेते दोषाः सन्ति महामुने" इत्यन्तेन देवदूतेनोक्तान् चतुर्मुखलोकपर्यन्तेषु लोकेषु दोषानाकर्ण्य "महादोषेण मे कार्यं न स्वर्गेण सुखेन वा। यत्र गत्वा न शोचन्ति न व्यथन्ति चलन्ति च॥ तदहं स्थानमत्यन्तं मार्गयिष्यामि केवलम्॥" इति मनसा विमृश्य "महान्त एते दोषास्तु त्वया स्वर्गस्य कीर्तिताः। निर्दोष एव यस्त्वन्यो लोकं तं प्रवदस्व मे॥"

इति मुद्गलेन पृष्टो देवदूतः आह—

"ब्रह्मणः सदनादूर्ध्वं तद्विष्णोः परमं पदम्।
शुद्धं सनातनं ज्योतिः परं ब्रह्मेति यं विदुः॥"

इति। अत्र नश्वरत्वादिदोषरहितलोक प्रश्नस्य भगवल्लोकेन प्रतिवचनात् तस्य नित्यत्वं सिद्धम्। एवं प्रमाणान्तराणि तत्र तत्रोदाहृतानि द्रष्टव्यानि। तत्सिद्धं वैष्णवपरमपदाख्य लोकविशेषस्य नित्यत्वम्। युज्यते चैतत्; सावयवस्यापि ईश्वरेच्छा विशेषवशादविनाशित्वोपपत्तेः। न हि सावयवत्वमेवार्थानां विनाशित्वे प्रयोजकम्, अपि तु ईश्वरस्य संजिहीर्षारूप संकल्पविशेष एव; अन्यथा सावयवेषु केषांचित् कतिपयकालं स्थितिः, केषांचिदावान्तरप्रलयम्, केषांचिदाप्राकृतप्रलयामिति स्थितितारतम्ये नियामकाभावप्रसङ्गात्। अतः परमात्मसंकल्प विशेषस्यैव विनाशित्वे प्रयोजकतया लोकविशेषविषये ईश्वरस्य संजिहीर्षाविरहात् तस्य सर्वदा स्थितिरुपपन्नतरैव। अनयैव दिशा तल्लोकस्थितभगवद्विग्रहविशेषादीनां नित्यत्वेन प्रमाणप्रतिपन्नानां सर्वदा स्थित्युपपात्तिर्बोध्या। यत्तु चतुर्मुखसभावेश्मप्राप्त्यभिसन्ध्यनुपपत्तिरूपमनुपपत्त्यन्तरमुक्तं तदप्यनुपदमेव परिहरिष्यते। अतः "स एनान् ब्रह्मगमयति" इत्यत्र ब्रह्मशब्दमुख्यार्थपरिग्रहेऽनुपपत्ति गन्धाभावेन लक्षणाया अन्याय्यत्वात् परं ब्रह्मोपासीनानेवार्चिरादिरातिवाहिको गणो नयतीत्येव युक्तमिति। एवं प्रथमसूत्रेण परस्य ब्रह्मणो गतिकर्मत्वोपपादक श्रुत्यन्तरसापेक्षहेतुमुक्त्वा तन्निरपेक्षहेतुमप्याह— "दर्शनाच्च" इति। मूर्धन्यनाड्या निष्क्रम्यार्चिरादिना प्रस्थितस्य विग्रहविशेषविशिष्टपरब्रह्मप्राप्तेः श्रुत्यैव प्रदर्शितत्वाच्च परं ब्रह्मोपासीनानेव नयतीति जैमिनिराचार्यो मन्यत इति सूत्रार्थः। अयं भावः—छान्दोग्ये अष्टमप्रपाठके तृतीयखण्डे

द्वादशखण्डे च श्रूयते "एषसंप्रसादोऽस्माच्छरीरात समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" इति। एष संप्रसादः "अहरहर्वा एवंवित् स्वर्गं लोकमेति" इति पूर्व-प्रस्तुत उपासको जीवः अस्माच्छरीरात् समुत्थाय मूर्धन्य-नाड्या बहिर्निष्क्रम्य परं ज्योतिः "भारूपः सत्यकामः सत्य-संकल्पः," "आदित्यवर्णं तमसः परस्तात्" इत्यादि श्रुत्य-न्तरप्रसिद्धप्रकृतिमण्डलोर्ध्वदेशवर्त्यप्राकृतदिव्यतेजोमय विग्र-हविशेषविशिष्टं परं ब्रह्मोपसंपद्य प्राप्य स्वेन रूपे-णापहतपाप्मत्वादि स्वाभाविकाकारेणाभि निष्पद्यते आवि-र्भवति आविर्भूततथाविधाकारो भवतीत्युक्तश्रुत्यर्थः। अत्र शरीरादुत्थायोपसंपद्यते इत्येतावदुक्तावप्युत्तरत्र षष्ठ-खण्डे "अथयत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभि-रूर्ध्वमाक्रमते स यावत् क्षिप्येन्मनस्तावदादित्यं गच्छत्येतद्वै खलु लोकद्वारम्" इत्यादिनादित्योपलक्षितार्चिरादिगते-रभिधाना दत्राप्यर्चिरादिनोपसंपत्तिरेव विवक्षिता। अत्र पर-शब्दविशेषितो ज्योतिःशब्दः स्वेतरसर्वज्योतिषामभिभावकं तेषामनुग्राहकं च ज्योतिराह। तच्च ज्योतिर्भगवदीयाप्राकृत-दिव्यमङ्गलविग्रहज्योतिरेव। "न तत्र सूर्यो भाति न चन्द्रता-रकं नेमा विद्युतो भान्ति कुतोऽयमग्निः। तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति।" इति "यस्यादित्यो भामुपयुज्य भाति" इति च श्रुतेः। अतोऽत्र परशब्दविशेषि-तोऽयं ज्योतिः शब्दस्तथाविधज्योतिर्मयदिव्यमङ्गल विग्रह विशिष्टं परं ब्रह्माचष्टे। स च परवासुदेव एव "नारायणपरो ज्योतिः" इति श्रुतेः। तत्र नारायणानुवाके परविद्यासु श्रुत-

शम्भु शिव परब्रह्मपरतत्त्वपरज्योतिः परमात्मादि शब्दवाच्योद्देशेन नारायणत्व विधानाय प्रवृत्ते प्रकृतपरज्योतिः शब्दवाच्योद्देशेन नारायणत्व विधानात् । प्रजापति विद्यायामस्य वाक्यस्यो परितनेन "स उत्तमः पुरुषः" इत्यनेन प्रकृतज्योतिःशब्दार्थे उत्तमपुरुष इति विवृतत्वाच्च । उत्तमपुरुषो हि वासुदेव एव, "अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः । उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः" इति गीतावचनात् "तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः" इति नारायणानुवाकादिषु परमात्मेत्युदाहृतो यो नारायणः स उत्तमपुरुषः । स च बद्धान्मुक्ताच्च जीवादन्य इति हि तदर्थः । अपि च "अथ यदतः परो दिवो ज्योति र्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेषु" इत्यत्र समस्तव्यष्टिसमाष्टिबहिर्भूतलोकेषु दप्यिमानत्वेन श्रुतं यज्ज्योतिस्तदेवेदं परं ज्योतिर्भवितुमर्हति, तस्यैव सर्वस्मात्परत्वोपपत्तेः । तच्च "पादोऽस्य सर्वाभूतानि त्रिपादस्यामृतं दिवि" इति तत्पूर्ववाक्येन पुरुषसूक्तप्रत्याभिज्ञापनात् पुरुषसूक्तोक्त तमः पारवर्त्यादित्यवर्णमहापुरुष एवेति प्रागेव व्यवस्थापितम् । तस्मादिदं परं ज्योतिर्निरतिशयदीप्तिमद्विग्रहविशिष्टं परं ब्रह्मैवेत्यर्चिरादिना गतस्य तत्प्राप्तेः श्रुत्यैव दर्शितत्वात् परमुपासीनानेव नयतीति । उक्त श्रुत्यार्चिरादिना गतस्य परब्रह्मप्राप्तिं व्यवस्थापयतानेन सूत्रेण "तयोर्ध्वमायन्नमृतत्वमेति, स एनान् ब्रह्म गमयति, एष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानव मावर्तं नावर्तन्ते' इति श्रुत्योरर्चिरादिना गतस्य मुक्ति प्राप्त्यपुन-

रावृत्ति प्रतिपादिकयोः क्रममुक्तिपरतया निर्वाहो बादर्युक्तः प्रत्युक्तो भवति । उदाहृतश्रुतौ ब्रह्मविदः शरीरादुत्थानं ततोऽव्यवधानेन परब्रह्म प्राप्तिः, तदुत्तरं स्वस्वरूपाभिनिष्पत्तिरूपा मुक्तिरिति शरीरान्निष्क्रान्तस्या व्यवधानेन परब्रह्मप्राप्तिमुक्त्योः प्रति पादनेन तस्य चतुर्मुखलोके आब्रह्मप्रलयमवस्थानं ततः पश्चान्मुक्तिरिति कल्पनस्योक्त श्रुति विरुद्ध त्वात् । "ते ब्रह्मलोके तु परान्तकाले परामृतात् परिमुच्यन्ति सर्वे" इति श्रुतेस्तु ब्रह्मैव लोको ब्रह्मलोकः तस्मिन् वर्तमानाः ब्रह्मनिष्ठा इत्यर्थः । ते पूर्वोक्ता यतयः परान्तकाले चरमदेहावसाने परामृतात् परस्माद्ब्रह्मण उपासन प्रीताद्धेतोः परिमुच्यन्तीत्यर्थः "ब्रह्मणा सह ते सर्वे" इत्यादिवचनं तु सुकृत विशेषेण चतुर्मुखलोक प्राप्त्यधिकारि विशेषविषयमिति जैमिने रभिप्रायः । एवं सूत्रद्वयेनार्चिरादिना गतस्य परब्रह्मप्राप्ति र्व्यवस्थापिता । इदानीमर्चि रादिना गतस्य चतुर्मुखसभावेश्मप्राप्त्यभि सन्धिदर्शनाच्चतुर्मुख एव प्राप्य इति यदुक्तं बादरिणा तत् प्रतिक्षिपति । "न च कार्ये प्रत्यभिसन्धिः" इति सूत्रेण । प्रत्यभिसन्धिः "प्रजापतेः सभां वेश्म प्रपद्ये" इत्यर्चि रादिना गतस्याभिसन्धिश्च कार्ये न, हिरण्यगर्भाख्यकार्यब्रह्मविषयो नेति सूत्रार्थः । अयं भावः—"प्रजापतेः सभां वेश्म प्रपद्ये" इति मन्त्रे प्रजापतिशब्दो न चतुर्मुखपरः, पूर्वोत्तरसंदर्भविरोधात् । अयं ह्यत्र पूर्वोत्तरसंदर्भः—छान्दोग्याष्टमप्रपाठके त्रयोदशखण्डे "अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात् प्रमुच्य । धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवाम्यभिसंभवामि"

इति त्रयोदशखण्डं समाप्य "आकाशो ह्वै नामरूपयोर्निर्वहिता" इत्यादिना चतुर्दशखण्डमुपक्रम्य "आकाशो ह वै नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृतं स आत्मा प्रजापतेः सभां वेश्म प्रपद्ये यशोऽहं भवामि ब्राह्मणानां यशो राज्ञां यशो विशां यशोऽहमनुप्रापत्सि सहाहं यशसां यशः" इत्याम्नायते। तदर्थस्तु अश्वो रोमाणीव पापं सुकृतदुष्कृतरूपं कर्म विधूय विहाय चन्द्रो राहोर्मुखाद्विमुच्येव शरीरं धूत्वा शरीरान्मुक्तो भूत्वा अकृतं नित्यं ब्रह्मणः परस्य लोकं ब्रह्मलोकमित्यत्र समानाधिकरणसमासस्य न्याय्यत्वेऽपि "प्रजापतेः सभां वेश्म प्रपद्ये" इत्युत्तरत्र सभावेश्मादिश्रवणेन लोकविवक्षाया उचितत्वात् षष्ठीसमास एवेहोचितः। तथासति अकृतत्वविशेषणमपि साधु संगच्छते। कृतात्मा सन्=कृतार्थात्मा सन् अभिसंभवामि=प्राप्नवानि आसमन्तात् काशत इत्याकाशः परमात्मा, ह वै इति प्रसिद्धिद्योतकम्। नामरूपयोर्निर्वहिता निर्वोढा व्याकर्तेत्यर्थः। यत् परमात्मस्वरूपं ते नामरूपे अन्तरा तयोर्मध्ये स्थितं ताभ्यामस्पृष्टमित्यर्थः। तत् पूर्वोक्त आकाशो ब्रह्म तत् अमृतममृतवत् भोग्यं स आकाश आत्मा सर्वेषामात्मभूतः प्रजापतेः सभां वेश्मच प्रपद्ये अहं ब्राह्मणानां यश आत्मा भवामि। अत्र यशःशब्द आत्मपरः। राज्ञां क्षत्रियाणां यशो भवामि। विशां यशो भवामि। अहं यशः परमात्मानमनु प्रापत्सि सर्वान्तरात्मत्वेनावगतवानस्मि स परमात्मात्मकोऽहं यशसां सर्वात्मनां यशः आत्मभूतोऽस्मीति। अत्र "अश्व इव रोमाणि" इति प्रथमेन मन्त्रेणोपासकस्य

स्वप्राप्यप्राप्तिसंकल्प उच्यते। नायं संकल्पश्चतुर्मुखलोकविषयः 'अकृतम्' इति लोकविशेषणविरोधात्, सर्वकर्मविनिर्मोकपूर्वकप्राप्तिश्रवणविरोधाच्च। "आकाशो ह वै" इति तदनन्तरवाक्येन पूर्वप्रस्तुतदहराकाशशब्दवाच्यपरमात्मनो नामरूपव्याकर्तृत्वोपलक्षितं जगत्कारणत्वं नामरूपाभ्यामस्पृष्टत्वं ब्रह्मत्वममृतत्वं सर्वान् प्रत्यात्मत्वं चोक्तम्। अनन्तरं "प्रजापतेः सभां वेश्म प्रपद्ये" इत्यादिना "यशसां यशः" इत्यन्तेन पूर्वप्रस्तुत एव संकल्पो विस्तरेणोच्यते। पूर्वं सामान्यतो ब्रह्मलोकप्राप्तिविषयतयोक्तः संकल्पोऽत्र सभावेश्मप्राप्तिविषय उक्तः। अनन्तरं यशोऽहमित्यादिना "तद्धैतत्पश्यन्" इत्युक्त वामदेवन्यायेन ब्रह्मसाक्षात्कारेण स्वस्य सर्वात्मभावाभिसन्धिरुक्तः। अतोऽस्य संदर्भस्य कृत्स्नस्य परमात्मविषयतया तन्मध्यपातितस्य "प्रजापतेः सभां वेश्म प्रपद्ये" इत्यस्य चतुर्मुखविषयत्वमप्रामाणिकमेव। न च प्रजापतिश्रुत्या "प्रजापतेः सभां वेश्म प्रपद्ये" इति वाक्येन च दुर्बलस्य प्रकरणस्य बाधात् 'प्रजापतेः' इत्यादिमन्त्रश्चतुर्मुखप्राप्तृविषय एवास्तु इति शङ्क्यम्, "यशोऽहं भवामि ब्राह्मणानाम्" इति वाक्यशेषविरोधात्। न हि चतुर्मुखप्राप्तुः सर्वात्मभावाभिसन्धिरुपपद्यते। अत उक्त श्रुतिवाक्ययोराभासत्वेन ताभ्यां प्रकरणबाधो न युक्तः। प्रजापतिशब्दस्तु "प्रजापतिश्चरति गर्भे अन्तः" इत्यादिप्रयोगात् परमात्मन एवासंकुचितप्रजापतित्वस्य "पतिं विश्वस्यात्मेश्वरम्" इत्यादि श्रुतिसिद्धत्वाच्च परमात्मन्युपपन्नः। सभावेश्मादिकं च तस्यानन्यथासिद्धश्रुत्यादिसिद्धमिति प्रागेव व्यवस्थापितम्। अतः "प्रजापतेः

सभां वेश्म प्रपद्ये" इत्ययमभिसन्धिर्न चतुर्मुखविषय इति। तदेवं सूत्रत्रयेण जैमिनिपक्षः प्रदर्शितः। तत्रार्चिरादिगतिशास्त्रेषु परस्य ब्रह्मणः सर्वव्याप्तस्य गन्तव्यत्वानुपपत्त्यार्चिरादिगतिगन्तव्यवाचिब्रह्मशब्दो लक्षणया हिरण्यगर्भाख्यकार्यब्रह्मपर इति पूर्वपक्षस्य परब्रह्मणो विशिष्टरूपेण गन्तव्यत्वोपपत्त्या मुख्यार्थं परित्यज्य लक्षणाश्रयणमयुक्तमिति युक्त्या प्रतिक्षेपपरं प्रथमसूत्रम्। अर्चिरादिना गतस्याव्यवधानेन शरीरविशेषविशिष्टपरब्रह्मप्राप्तेः श्रुत्यैव प्रदर्शितत्वेन हेतुना तत्प्रतिक्षेपपरं द्वितीयसूत्रम्। अर्चिरादिमार्गगन्तुरभिसन्धिविशेषरूपलिङ्गस्य पूर्वपक्षोपष्टम्भकस्य निरासपरं तृतीयसूत्रम् इति विवेकः।

इदानीं भगवान् बादरायणः स्वसिद्धान्तमाह— "अप्रतीकालम्बनान्नयतीति बादरायणः उभयथा च दोषात् तत्क्रतुश्च" इति। प्रतीकः अवयवः एकवस्त्वेकदेशः चिदचिद्विशिष्टब्रह्मरूपविशिष्टे विशेषणांश इति यावत्। तदालम्बनास्तदुपासकाः। तदुपासनं च द्विविधम्—स्वरूपेण ब्रह्मदृष्ट्या चेति। ततश्च स्वरूपेण ब्रह्मदृष्ट्या वा चिदचिदुपासका इति फलितोऽर्थः। तद्व्यतिरिक्ता अप्रतीकालम्बनाः तान् नयत्यर्चिरादिरातिवाहिको गण इति भगवान् बादरायणो मन्यते। कुतः? उभयथा च दोषात्। कार्यमुपासीनान् नयतीति पक्षे परं ब्रह्मोपासीनानेव नयतीति पक्षे चोभयस्मिन्नपि दोषसंभवात्। तत्क्रतुन्यायश्चात्र साधको भवतीति सूत्रार्थः। अयं भावः—कार्यं हिरण्यगर्भमुपासीनान्नयतीति

पक्षे "अस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" इति श्रुतिर्विरुध्यते । तया अर्चिरादिना गतस्याव्यवधानेन परब्रह्मप्राप्तिप्रतिपादनात्, अब्रह्मविदो ब्रह्मप्राप्त्यङ्गीकारे तत्क्रतु श्रुतिविरोधात् । परमुपासीनानेव नयतीति पक्षे "तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते । तेऽर्चिषमभिसंभवन्ति" इति श्रुतिर्विरुध्यते तत् पूर्वप्रस्तुतं प्रत्यगात्मवस्तु इत्थम् अचिद्विविक्तत्वेन ये विदुरुपासते ये चान्ये अमी अरण्ये योगयोग्ये देशे स्थित्वा श्रद्धामास्तिक्यं प्राप्यवस्तु प्राप्तौ त्वरां वा पुरस्कृत्येतिशेषः । 'श्रद्धा' इत्यत्र द्वितीयाविभक्तिलोपश्छान्दसः । तपः ब्रह्म उपासते । अत्र 'इति' शब्दोऽविवक्षितार्थः । ते उभयेऽपि अर्चिषमभिसंभवन्ति प्राप्नुवन्तीति ह्युक्तश्रुत्यर्थः । अनया प्रकृतिवियुक्तप्रत्यगात्मोपासकस्याप्यर्चिरादिगतिविधानात् परमुपासीनानेव नयतीति पक्षे निरुक्तश्रुतिविरोधः प्रसज्यते । अतः प्रतीकालम्बनव्यतिरिक्तान् नयतीत्येवाङ्गीकार्यम् । तथा सति प्रतीकालम्बनव्यतिरिक्तत्वाकारेण संग्राह्य यावत्संग्रहस्यासंग्राह्यव्यावृत्तेश्च संभवेन दोषाभावात् । न च प्रकृतिवियुक्तप्रत्यगात्मोपासनरूपपञ्चाग्निविद्यानिष्ठस्यापि पूर्वोक्तप्रतीकालम्बनत्वाक्रान्ततया प्रतीकालम्बनव्यतिरिक्तत्वाभावेन न तत्संग्रहसंभव इति वाच्यम्, पञ्चाग्निविद्यानिष्ठस्याप्युक्तश्रुत्या ब्रह्मप्राप्तेः प्रतिपादितत्वात् ब्रह्मप्राप्तेश्च ब्रह्मोपासनं विना असिद्धेः तत्क्रतुन्यायसिद्धत्वात् श्रुतब्रह्मप्राप्त्यन्यथानुपपत्त्या पञ्चाग्निविद्यानिष्ठस्यापि ब्रह्मोपासकत्वकल्पनेनाप्रतीकालम्बनत्वेन तत्संग्रहसंभवात् ।

नचैवं पञ्चाग्निविद्यानिष्ठस्यापि ब्रह्मोपासकत्वे ब्रह्मोपासकान् नयतीति जैमिनिमतादविशेषप्रसङ्ग इति वाच्यम्, पञ्चाग्निविद्यानिष्ठस्यापि तत्क्रतुन्यायेन ब्रह्मोपासकत्वे सिद्धे "तद्य इत्थं विदुर्येचेमेऽरण्ये श्रद्धा तप इत्युपासते" इति पञ्चाग्निविदामन्येषां च ब्रह्मविदां विभज्य निर्देशान्यथानुपपत्त्या पञ्चाग्निविदः परमात्मात्मकस्वात्मोपासकाः, इतरे तु स्वात्मशरीरकपरमात्मोपासका इति चोपासनवैचित्र्यस्याङ्गीकार्यतया ब्रह्मविशेष्यकोपासननिष्ठान् नयतीति जैमिनिमतात् विशेषसिद्धेरिति । अत्र प्रत्यगात्मविशेष्यतया तद्विशेषणतया वा परमात्मोपासकानातिवाहिको गणो नयति, न तु हिरण्यगर्भोपासकानिति सिद्धान्तकरणात् अर्चिरादिना प्रस्थितानां चतुर्मुखप्राप्तिपक्षं निराकृत्य परब्रह्मप्राप्तिपक्षः सिद्धान्तित इति सिद्धम् । यत्तु "कार्यं बादरिः" इत्याद्यष्टसूत्री एकमाधिकरणम् । अप्रतीकालम्बनसूत्रं तु पृथगधिकरणम् । उक्ताष्टसूत्र्यामपि पूर्वपञ्चसूत्री सिद्धान्तपक्षः । अनन्तरत्रिसूत्री तु पूर्वपक्षः इति व्याख्यानम्, तन्न, सूत्रकारशैलीविरोधात्, पञ्चसूत्र्या एव पूर्वपक्षसूत्रताग्राहकसूत्रस्वरसविरोधात्, श्रुतिस्मृतिविरोधाच्च । तथाहि—अस्मिन् शास्त्रे उपन्यस्त ऋष्यन्तरमतव्यावृत्तिविवक्षा यत्र तत्रैव बादरायणमतस्य पृथक्कथनमिति नियमो दृष्टः । यथा—"मध्वादिष्वसंभवादनधिकारं जैमिनिः भावं तु बादरायणोऽस्ति हि ॥ धर्मं जैमिनिरत एव । पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥ शेषत्वात्पुरुषार्थवादो यथान्येष्विति जैमिनिः । अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॥ परामर्शं जैमिनिरचोदनाच्चापवदति

हि । अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥ ब्राह्मेण जैमिनि-रुपन्यासादिभ्यः । चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः । एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः । अभावं बादरिराह ह्येवम् । भावं जैमिनिर्विकल्पामननात् । द्वादशाहव-दुभयविधं बादरायणोऽतः" इति । अत्र सर्वत्र पूर्वसूत्रोप-न्यस्त ऋष्यन्तरमतव्यावृत्त्यर्थत्वं बादरायणमतपृथक्कथनस्य स्पष्टम् । यत्र ऋष्यन्तरमतव्यावृत्तेरविवक्षा, तत्र बादरायण-मतस्य पृथक्कथनं न दृष्टम् । यथा—"संपत्तेरिति जैमिनिः तथाहि दर्शयति अवस्थितेरिति काशकृत्स्नः । सुकृतदुष्कृते एवेति तु बादरिः । आर्त्विज्यमित्यौडुलोमिः, तस्मै हि परिक्रि-यते" इत्यादिषु । आतोऽन्वयव्यतिरेकाभ्यां बादरायणमत-कथनस्य पूर्वसूत्रोपन्यस्त ऋष्यन्तरमतव्यावृत्त्यर्थत्वानियमाद-त्रापि बादरायणमतस्य पृथक्कथनं पूर्वसूत्रोपन्यस्तमतव्यावृत्त्य-र्थमेवेति निश्चीयते । अतोऽप्रतीकालम्बनसूत्रस्य पृथगधि-करणत्वं सूत्रकारशैलीविरुद्धमिति सिद्धम् । एवं बादरिपक्षीय-पञ्चसूत्र्यां "विशेषितत्वाच्च" इति सूत्रोपन्यस्तस्यार्चिरादि-मार्गगामिनः कार्यब्रह्मप्राप्त्यभिसन्धिलिङ्गस्य जैमिनित्रिसूत्र्यां "न च कार्ये प्रत्यभिसन्धिः" इति सूत्रेण प्रत्याख्यानात् बादरिपक्षस्य पूर्वपक्षत्वं जैमिनिपक्षस्योत्तरपक्षत्वं च सूत्रस्वर-ससिद्धम् । यदि बादरिपक्षीयपञ्चसूत्र्यां जैमिनिपक्षप्रतिक्षेपपरं किंचित् सूत्रं दृश्येत, तदाहि बादरिपक्षस्योत्तरपक्षत्वं स्यात् । न चैवं दृश्यते । प्रत्युत बादरिपक्षप्रतिक्षेपपराण्येव सर्वाणि जैमिनिपक्षीयसूत्राणि दृश्यन्ते । तद्यथा—"परं जैमिनि-र्मुख्यत्वात्" इति सूत्रेण "सामीप्यात्तु तद्व्यपदेशः" इति

बादरिसूत्रार्थः प्रतिक्षिप्यते । "दर्शनाच्च" इति सूत्रेण "कार्यात्यये तदध्यक्षेण सहातः परमभिधानात्" इति सूत्रार्थः प्रत्याख्यायते । "न च कार्ये प्रत्यभिसन्धिः" इति सूत्रेण "विशेषितत्वाच्च" इति सूत्रार्थौ निरस्यते । अतो बादरिपक्षस्य पूर्वपक्षत्वं जैमिनिपक्षस्योत्तरपक्षत्वमेव च सूत्रस्वरससिद्धम् । यत्तु जैमिनिपक्षस्यानुपपत्तिदोषदुष्टतया स पक्षः पूर्वपक्षतयाव्याख्यातः; नह्यसत्यपि संभवे मुख्यस्यैवार्थस्य ग्रहणमिति कश्चिदाज्ञापयितास्ति; न च सर्वव्यापस्य परस्य ब्रह्मणो गन्तव्यतासंभव इति;

अत्रेदं प्रतिवक्तव्यम्—आर्चिरादिगतिश्रुतिषु अर्चिरादिगतिगन्तव्यवाचि नपुंसकब्रह्मशब्दस्य परब्रह्मणि मुख्यवृत्ततामवलम्ब्य स्वपक्षं प्रवर्तयन् जैमिनिराचार्यो न हि मुख्यार्थस्य संभवं मनस्यनिधायैव स्वपक्षं प्रवर्तयेत् । नह्यनुन्मत्तः कश्चित् गङ्गाशब्दः प्रवाहे मुख्यवृत्त इति कृत्वा गङ्गायां घोष इत्यत्र गङ्गाशब्दस्य प्रवाहपरतां ब्रूयात् । अतः प्रकृतब्रह्मशब्द मुख्यवृत्तिमवलम्ब्य स्वपक्षं प्रवर्तयन् जैमिनिर्मुख्यार्थस्य संभवं मनसि निधायैव स्वपक्षं प्रवर्तितवानिति सुगममेतत् । संभवप्रकारश्च प्रागेव दर्शितः । अतो जैमिनिपक्षस्यैवोत्तरपक्षत्वं सूत्रस्वरसासिद्धमिति सिद्धम् । एवमर्चिरादिना प्रस्थितस्याव्यवधानेन परब्रह्मप्राप्तेः श्रुतिस्मृतिष्वभिधानात् तस्य चतुर्मुखलोके आप्रलयमवस्थानम्, पश्चादेव परब्रह्मप्राप्तिरिति पक्षे श्रुतिस्मृतिविरोधो दुष्परिहरः । अभिधीयते हि अर्चिरादिनाप्रस्थि-

तस्याव्यवधानेन परब्रह्मप्राप्तिः "एवमेष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते"। "तस्य तावदेव चिरं यावन्नविमोक्ष्ये अथ संपत्स्ये" इत्यादिश्रुतिषु "ऊर्ध्वमेकः स्थितस्तेषां योभित्वा सूर्यमण्डलम्। ब्रह्मलोकमतिक्रम्य तेन याति परां गतिम्॥" इत्यादिस्मृतिषु च। यद्यप्युदाहृतश्रुत्योरर्चिरादिगतिर्न कण्ठोक्ता, तथापि शरीरादुत्थायोपसंपत्तिवचनात् गतिविशेषः सिद्धः। स चार्चिरादिरेव भवितुमर्हति, ब्रह्मप्रापकत्वात् समानप्रकरणे शताधिकनाड्यार्चिराद्युपक्रमभूतयोर्ध्वगमनाभिधानाच्च। शरीरादुत्थानं नाम शरीरादात्मनो विवेचनमित्यर्थवर्णनं पुनरनुपादेयम्, अशब्दलभ्यत्वात तस्यार्थस्य। शब्दस्वरसलभ्यार्थपरित्यागे मानाभावाच्च। "यावन्नविमोक्ष्येऽथसंपत्स्ये" इत्यत्र तूक्तश्रुत्यैकार्थ्यादर्चिरादिगतिसिद्धिर्बोध्या। एवं प्रश्नोपनिषदि— "स यो ह वैतद्भगवन्मनुष्येषु प्रायणान्तमोंकारमभिध्यायीत कतमं वाव स तेन लोकं जयति" इति सत्यकामप्रश्नस्य प्रतिवचने "यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेजसि सूर्ये संपन्नो यथा पादोदरस्त्वचा विनिर्मुच्यते एवं हैव स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते" इत्यत्र परपुरुषशब्दितं परमात्मानमभिध्यायतः सर्वपापविनिर्मोकपूर्वकं सूर्यसंपत्त्युपलक्षितार्चिरादिमार्गेणाव्यवधानेन परब्रह्मलोकप्राप्तिः, तत्र जीवघनशब्दसंगृहीताच्चतुर्मुखात् परस्य परमपुरुषस्य साक्षात्कारश्च प्रतिपाद्यते। नचात्र ब्रह्मलोकशब्दस्य चतुर्मुखलोकपरता सुवचा। सर्वकर्मविनि-

र्मोकपूर्वकं प्राप्यत्वश्रवणविरोधात् । प्रकृतब्रह्मलोकविषयेण "स सामाभिर्यत्तत्कवयो वेदयन्ते" इति श्लोकेन "तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः" इति श्रुतिप्रत्यभिज्ञापकेन तस्य लोकस्य वैष्णवपरमपदत्वावगमविरोधाच्च । एवं मुण्डकोपनिषदि प्रथममुण्डके द्वितीयखण्डे—"तपः श्रद्धे ये ह्युपवसन्त्यरण्ये शान्ता विद्वांसो भैक्षचर्यां चरन्तः । सूर्यद्वारेण ते विरजाः प्रयान्ति यत्रामृतः स पुरुषो ह्यव्ययात्मा" इत्यर्चिरादिना गतस्य परमपुरुषस्थानमेव साक्षात् प्राप्यतया श्रूयते, न चतुर्मुखलोकः अमृतत्वाव्ययात्मत्वविशेषितपुरुषाधिष्ठितस्थानविशेषस्यैवात्रार्चिरादिमार्गप्रस्थितपुरुषप्राप्यत्वश्रवणात् । अमृतत्वाव्ययात्मत्वयोः परिमितायुषि संकुचितज्ञाने चतुर्मुखेऽसंभावितत्वात् । एवं कौषीतकिनामुपनिषदि प्रथमाध्याये "स एतं देवयानं पन्थानमापद्य" इत्युपक्रम्य "स प्रजापतिलोकं स ब्रह्मलोकम्" इत्यादिनार्चिरादिना प्रस्थितस्य चतुर्मुखलोकमतिक्रम्य ब्रह्मलोकप्राप्तिः स्पष्टमेव प्रतिपादिता । अयं च ब्रह्मलोकश्छान्दोग्येऽष्टमप्रपाठके पञ्चमखण्डे—"अरश्चह वैण्यश्चार्णवौ ब्रह्मलोके तृतीयस्यामितो दिवि" इत्यत्राभिहितो ब्रह्मलोक एवेत्यराख्यह्रदापराजितायतनादिभिः प्रत्यभिज्ञापकलिङ्गैः प्रत्यभिज्ञायते । स च ब्रह्मलोको न चतुर्मुखलोकः, अपि तु परब्रह्मलोक एवेति प्रागेव सुष्ठुनिरूपितम् । तदेवमर्चिरादिना प्रस्थितश्चतुर्मुखलोके आब्रह्मप्रलयमवतिष्ठत इति बादरिपक्ष उदाहृतश्रुतिस्मृतिविरुद्ध इति सिद्धम । अतोऽप्रतीकालम्बनसूत्रं पृथगधिकरणम् । "कार्यं बादरिः" इत्यादिनोक्त बादरिपक्ष एव सिद्धा-

न्तपक्षः, "परं जैमिनिः" इत्यादिनोक्तजैमिनिपक्षस्तु पूर्वपक्ष इति व्याख्यानमयुक्तमिति सिद्धम्। इत्थं च "कार्यं बादरिः" इत्यादिदशसूत्री एकमधिकरणम्। तत्राप्यप्रतीकालम्बनसूत्रमेव सिद्धान्तसूत्रमित्येव युक्तम्। तत्र च प्रतीकालम्बनव्यतिरिक्तत्वोपाधिना ब्रह्ममुख्यविशेष्यकोपासननिष्ठास्तद्विशेषणकोपासननिष्ठाश्चेति द्विविधाधिकारिणः संगृह्य तथाविधद्विविधाधिकारिणामर्चिरादिना ब्रह्मप्राप्तिरिति सिद्धान्तकरणादर्चिरादिना प्रस्थितो हिरण्यगर्भं प्राप्नोतीति बादरिपक्षः सर्वात्मना प्रतिक्षिप्तः। परब्रह्ममुख्यविशेष्यकोपासननिष्ठानेव नयत्यर्चिरादिरातिवाहिको गण इति जैमिनिपक्षे त्वन्यविध ब्रह्मोपासननिष्ठानपि नयतीति सिद्धान्तकरणात् ब्रह्ममुख्यविशेष्यकोपासननिष्ठानेवेति नियमांशः प्रतिक्षिप्तः। ब्रह्मोपासननिष्ठान् ब्रह्म प्रापयतीति त्वङ्गीकृतम्। अतः कार्याधिकरणेऽर्चिरादिना प्रस्थितस्य ब्रह्मविदश्चतुर्मुखप्राप्तिपक्षं प्रतिक्षिप्य परब्रह्मप्राप्तिपक्षः सिद्धान्तित इति सिद्धम्। इदमत्रावधेयम्— चतुर्थाध्याये उत्क्रान्तिपादादित्रिपाद्यामुत्क्रान्तिपादे ब्रह्मविदः शरीरादुत्थानक्रमस्यार्चिरादिपादे शरीरादुत्थितस्य तस्य मार्गविशेषेण ब्रह्मोपसंपत्तेः फलपादे ब्रह्मोपसंपन्नस्य स्वरूपाविर्भावतत्पूर्वकव्यवहारविशेषाणां च क्रमेण निरूपणात् "संपद्याविर्भावः स्वेन शब्दात्" इति फलपादोपक्रमसूत्रे संपद्येत्यनेन "परं ज्योतिरुपसंपद्य" इति श्रुतिप्रत्यभिज्ञापनाच्चेयं त्रिपादी "एष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" इति श्रुत्यर्थनिरूपणपरेति। चतुर्थपादे "संपद्याविर्भावः" इत्यादिना ब्रह्मोपसं-

पत्त्यनन्तरभाविफलनिरूपणेन कार्याधिकरणं "परं ज्योतिरुपसंपद्य" इत्यत्र ल्यप्प्रत्ययप्रकृतिपर्यन्तार्थनिरूपणपरमिति च स्पष्टमवगम्यते । अतः कार्याधिकरणम् "अस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य" इति श्रुत्युक्तपरज्योतिरुपसंपत्तिनिरूपणपरम् । तत्र च श्रुतौ परज्योतिः शब्दार्थः प्रकृतिमण्डलस्योपरिष्टादप्राकृतदेशविशेषे दीप्यमानादित्यवर्णदिव्यमङ्गलविग्रहविशेषविशिष्टो वासुदेव इति प्रागेव सुष्ठु निरूपिततया कार्याधिकरणेऽर्चिरादिना प्रस्थितस्या प्राकृतदेशविशेषावस्थित परवासुदेव प्राप्तिरेव सिद्धान्तितेति सिद्धम् ॥

चतुर्थपादे संपद्याविर्भावाधिकरणे "संपद्याविर्भावस्स्वेन शब्दादिति" सूत्रेणार्चिरादिमार्गेण प्रकृतिमण्डलस्योपरिष्टादप्राकृतदेशविशेषे आदित्यवर्ण दिव्यमङ्गलविग्रहविशेषविशिष्टवासुदेवाख्य परज्योतिरुपसंपन्नस्य तदुपसंपत्त्या कर्मकृतस्वरूपतिरोधान निवृत्तिरूपा मुक्तिरुक्ता; संपद्य=परंज्योतिरुपसंपद्य, आविर्भावः स्वेनरूपेणाभिनिष्पद्यत इति श्रुतावभिनिष्पद्यत इत्यनेन प्रतिपाद्यते । स्वेनशब्दात्स्वेनेतिरूप विशेषणादिदमवगम्यत इति सूत्रार्थः ॥

अयं भावः—अस्माच्छरीरातसमुत्थाय परंज्योतिरुपसंपद्य स्वेनरूपेणाभिनिष्पद्यत इति श्रुतौ परज्योतिरुपसंपत्त्यनन्तरभावितयोच्यमाना अभिनिष्पात्तिः पूर्वसिद्धस्वरूपस्याविर्भाव एव, नत्वपूर्वाकारोत्पात्तिः, स्वेन रूपेणाभिनिष्पद्यत इत्यत्र स्वेनेति रूपविशेषणवैयर्थ्यप्रसंगात्, आगंतुकाकारो-

त्पत्तिपक्षे हि उत्पद्यमानस्य रूपस्य स्वीयताया अर्थसिद्धतया रूपे स्वेनेति विशेषणमनर्थकं भवति, अतस्स्वेनेति रूपविशेषणसार्थक्यान्यथानुपपत्त्या पूर्वसिद्धस्वरूपाविर्भाव एव स्वेन रूपेणाभिनिष्पद्यत इत्यनेनोच्यत इत्यास्थेयं; पूर्वसिद्धस्य स्वरूपस्य कोयमिदानीमाविर्भावोनामेति चेत्तिरोधाननिवृत्तिरेवेति ब्रूमः; प्रत्यगात्मस्वरूपं हि स्वतोऽपहतपाप्मत्वादिगुणाष्टकविशिष्टमिति ब्राह्माधिकरणे वक्ष्यते, तथाविधं च तत्स्वरूपं संसारदशायां तिरोहितं। तदेतत् "पराभिध्यानात्तु तिरोहितं ततोह्यस्यबंधविपर्ययाविति" सूत्रे प्रतिपादितं। अस्मिन्सूत्रे तदित्यध्याहार्यम्। तच्छब्देन "मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वादिति" पूर्वसूत्रे प्रस्तुतं स्वरूपं परामृश्यते। ततश्चास्य जीवात्मनस्तत्स्वरूपं पराभिध्यानात्=परमात्मसंकल्पात् तिरोहितं। हि=यतोऽस्य जीवस्य बंधविपर्ययौ संसारबंधमोक्षौ ततः परमात्मसंकल्पाद्भवतः; इति सूत्रार्थः। अपहतपाप्मत्वादेस्स्वाभाविकाकारस्य तिरोधानं नामतत्कार्यादर्शनं सत्यसंकल्पत्वं हीच्छाविषयस्य सर्वस्यैव वस्तुनोऽनुपद्मेव सिद्धिप्रयोजकशक्तिमत्वं। तत्कार्यभूता इच्छाविषयसर्वसिद्धिस्संसारदशायां जीवात्मनो न दृश्यते। अतस्तत्तिरोहितमित्युच्यते। तिरोधायकश्चानादि कर्ममूलक भगवान्निग्रहसंकल्पः। तन्निवृत्तौ सत्यसंकल्पत्वादेः कार्यकरतया कार्यदर्शनरूपाकार्यादर्शनरूपतिरोधाननिवृत्तिर्भवति। सैव स्वरूपाविर्भाव इत्युच्यत इति। अयं न्यायः ज्ञानादिगुणान्तरेष्वपि ज्ञेयः। ज्ञानमपिहि संसारदशायां कर्मणा संकुचितं भवति। मुक्तौ तु संकोचककर्मविगमात्स्वतस्सिद्धविकासा-

वस्थां प्राप्नोति । ज्ञानस्य संकोचोनाम परिमितविषयकत्वं । विकासश्च=सर्वं ह पश्यः पश्यतीत्यादिश्रुतिसिद्धः यथावस्थित-सर्ववस्तुसाक्षात्कारः । तदेवं परं ज्योतिरुपसंपन्नस्य कर्मकृत-स्वरूपतिरोधाननिवृत्तिरूपा मुक्तिरुक्ता । तिरोधाननिवृत्त्या साक्षात्कृतसर्ववस्तुयाथात्म्यस्य परब्रह्मापृथक्सिद्ध विशेषणत्व-रूपतत्परतंत्रतया स्वात्मानुभवोऽविभागाधिकरणे सिद्धान्तितः। तत्र हि परं ज्योतिरुपसंपन्नो मुक्तस्स्वात्मानं परमात्मनः पृथ-ग्भूतमनुभवति । न तु ततोऽविभक्तं । अविभागस्याभेदरू-पत्वे, "सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चितेति" मुक्तस्य ब्रह्मसाहित्य श्रवणात्तस्य च भेदगर्भतया तद्विरोधा-पत्तेः । अविभागस्यापृथक्सिद्ध विशेषणत्वरूपत्वे "निरंजनः परमंसाम्यमुपैतीति" परमसाम्यश्रुति विरोधप्रसंगात् । प्रकार-प्रकारिभावेन वैषम्ये हि परमसाम्यं विरुद्ध्यत इति पूर्वपक्षे प्राप्ते सिद्धान्त उक्तः—"अविभागेन दृष्टत्वादिति" अवि-भागेन=ब्रह्मापृथक्सिद्धविशेषणत्वेन स्वात्मानमनुभवति मुक्तः; स्वात्मस्वरूपयाथात्म्यस्य साक्षात्कृतत्वादिति सूत्रार्थः ।

अयं भावः—"य आत्मनि तिष्ठन्नात्मनोऽन्तरोय-मात्मा न वेद यस्यात्मा शरीरमित्यादि" श्रुतिभिर्जीवात्मन-स्स्वरूपं परमात्मशरीरतया तदपृथक्सिद्धविशेषणमित्यवगतम् । ततश्च संसारदशायां स्वात्मनोयथावदनुभवस्य कर्मणा प्रति-बद्धत्वेपि मोक्षदशायां प्रतिबन्धकविगमेन यथावदनुभवसंभ-वान्मुक्तस्स्वात्मानं परमात्मापृथक्सिद्धविशेषणतयैवानुभवति; मुक्तस्य परमात्मापृथक्सिद्धविशेषणत्वेपि न परमसाम्यश्रुति-विरोधः; ब्रह्मगुणानुभवांशमात्रे परमसाम्यस्य तत्र विवक्षि-

तत्वात् । यथा तुलाधृतस्वर्णशिलाशकलयोः परमसाम्योक्तेर्न सर्वांशे साम्ये तात्पर्यं; अपितु परिमाणमात्रे तद्वदिति । स्पष्टीभविष्यति चेदमुत्तरत्रेति । यत्तु अविभागेन ब्रह्माभेदेन-तिष्ठति मुक्तः; तत्वमस्यादिश्रुतिषु तथादृष्टत्वादिति सूत्रार्थ-वर्णनं; तदनुपादेयं; जीवब्रह्मणोरैक्यस्य तत्वमस्यादि श्रुत्य-र्थतां प्राङ्निराकृतवता सूत्रकारेणेह तस्य तदर्थतावर्णना-संभवेन सौत्रस्य दृष्टत्वादित्यस्य तत्वमस्यादिश्रुतिषु जीवब्रह्म-णोरैक्यस्य दृष्टत्वादित्यर्थवर्णनस्यायुक्तत्वात् । पूर्वं हि द्विती-याध्याय प्रथमपादे इतरव्यपदेशाधिकरणे तत्वमस्यादिश्रुतिषु जीवब्रह्मणोरभेदश्रवणाद्ब्रह्मणो जगत्कारणत्वे तस्य स्वहिता-करणादिदोषप्रसंगेन ब्रह्मणो जगत्कारणत्वपक्षोनुपपन्न इत्या-शंक्य जीवब्रह्मणोर्भेदस्यैव श्रुतिषु प्रतिपादनान्नोक्तदोषः इति सिद्धान्तितम् । तथाच तदधिकरणे सूत्राणि "इतरव्य-पदेशाद्धिताकरणादिदोषप्रसंगः" "अधिकंतुभेदनिर्देशात्" "अश्मादिवच्चतदनुपपत्तिरिति" अत्र प्रथमं पूर्वपक्षसूत्रम् । इतरे सिद्धान्तसूत्रे । अत्र प्रथमसूत्रे प्रकरणाद्ब्रह्मण इति अध्याहार्यं; तथाच ब्रह्मण इतरव्यपदेशात्, इतरत्वव्यपदे-शात् जीवत्वव्यपदेशात् इत्यर्थः, हिताकरणादिदोषप्रसक्तिः स्वस्य हिताकरणमहितकरणंचेति दोषद्वयं प्रसज्यत इति प्रथमसूत्रार्थः ।

अयं भावः—"तत्त्वमासि" "अयमात्मा ब्रह्म" इत्यादिश्रुतिषु जीवब्रह्मणोरभेदः प्रतिपाद्यते; ततश्च ब्रह्मणो जगत्स्रष्टृत्वाभ्युपगमे तस्य स्वहिताकरणं स्वाहितकरणमिति दोषद्वयं प्रसज्यते; इदं हि जगदाध्यात्मिकादि बहुतरदुःख-

हेतुतया जीवात्मनोऽत्यंतप्रतिकूलमुपलभ्यते; ततश्चेदृशजगत्सृष्टिर्ब्रह्मणस्स्वस्यैवाहितसृष्टिरूपा। स्वस्यैव जीवत्वात नहि बुद्धिपूर्वकारी कश्चित्स्वयमेव स्वस्यानर्थमुत्पादयतीति युक्तं। नचाज्ञानात्तत्सृष्टिः; ब्रह्मणस्सर्वज्ञत्वाभ्युपगमात। नापि पारतंत्र्यात्, तस्य स्वतंत्रत्वाभ्युपगमाविरोधादिति। अस्मिन्पूर्वपक्षे सिद्धान्तमाह "अधिकंतुभेदनिर्देशादिति" अत्र ब्रह्मेति जीवादितिचाध्याहार्यं; ब्रह्म जीवादधिकमर्थांतरम् "ज्ञाज्ञौद्वावजावीशनीशौ" "सकारणं करणाधिपाधिपः" "प्रधानक्षेत्रज्ञपतिर्गुणेशः" इत्यादिश्रुतिषु जीवब्रह्मणोर्भेदनिर्देशादिति सूत्रार्थः। अयमाशयः--यदि ब्रह्म जीवाभिन्नंस्यात्तदा प्रागुक्तरीत्या ब्रह्मणो जगत्स्रष्टृत्वमनुपपन्नं स्यात्; ब्रह्मतु जीवाद्वस्त्वंतरं; ततश्च सर्वज्ञं सर्वशक्तिसत्यसंकल्पं परं ब्रह्म क्षेत्रज्ञानां तत्तत्कर्मानुगुण्येन हितमहितं च जगत्सृजतीति नकिंचिदनुपपन्नमिति। ननूदाहृतश्रुतिषु जीवब्रह्मणोर्यथा भेदो व्यपदिश्यते; तथा पूर्वोदाहृतश्रुतिषु तयोरभेदोपि व्यपदिश्यते; एवं श्रुतिषु भेदे अभेदेच प्रतिपाद्यमाने जीवादर्थांतरमेव परं ब्रह्मेति कुतोनिश्चीयते; न च भेदश्रुतिविरोधेनाभेदश्रुतेरन्यथानेयतया तथा निश्चीयत इति वाच्यम्; अभेदश्रुतिविरोधेन भेदश्रुतेरन्यतानयनप्रसंगस्य दुर्वारत्वादित्याशंकां परिहरति। "अश्मादिवच्च तदनुपपत्तिरिति" अश्मादिवदिति षष्ठ्यंताद्वतिः; तदनुपपत्तिरित्यत्र तच्छब्देन पूर्वपक्षसूत्रे इतरव्यपदेशादित्यनेन विवक्षितं जीवस्य ब्रह्मणा सह स्वरूपैक्यं परामृश्यते। ततश्चाश्मादिवत् पाषाणलोष्टादेरिव जीवस्यापि ब्रह्मणा सह स्वरूपैक्यमनुपपन्नमिति सूत्रार्थः।

अयं भावः—यथा पाषाणादेर्ब्रह्मणा समं स्वरूपैक्यमनुपपन्नं । जडाजडयोरैक्यायोगात्, तथा जीवात्मनोपि ब्रह्मणा समं स्वरूपैक्यमनुपपन्नम् । कर्मफलभोगार्हतदनर्हयोस्स्वरूपैक्यायोगात् । जीवब्रह्मणोः कर्मफलभोगार्हत्वतदनर्हत्वेच, तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीतीत्यादिश्रुतिसिद्धे । ततश्च यथा सर्वं खल्विदं ब्रह्मेत्यादिसामानाधिकरण्येन काष्ठलोष्टपाषाणादेर्जगत आपाततो ब्रह्मस्वरूपैक्यावगमेपि श्रुतेस्तदर्थकत्वे बाधितार्थकत्व प्रसंगेनान्यपरत्वमाश्रीयते । तथा तत्त्वमसीत्यादेर्जीवब्रह्मणोस्स्वरूपैक्यपरत्वे बाधितार्थकत्वप्रसंगेनान्यपरत्वमेवाश्रयणीयम् । इत्थं चाभेदश्रुतीनामन्यपरत्वेन भेदश्रुतेर्निष्प्रतिद्वंद्वितया जीवब्रह्मणोर्भेदसिद्धिर्निराबाधैवेति । यत्तु जीवेश्वरयोः कल्पितभेदोऽत्र सूत्रकारैरभिधीयते; न तात्विकभेद इति सूत्राभिप्रायवर्णनं, तदनादरणीयम् । अपरमार्थभेदस्य प्रसक्ताक्षेप प्रतिक्षेपकत्वायोगेन सूत्रस्य तत्परत्वासंभवात् । जीवादनन्यस्य ब्रह्मणो जगत्स्रष्टृत्वे स्वाहितकरणादि दोषप्रसंग इति ह्याक्षेपः प्रसक्तः । जीवाद्ब्रह्मणोभिन्नत्वेननोक्तदोषप्रसंग इति तत्परिहारोऽनेन सूत्रेणाभिधीयते । सभेदोयद्यपरमार्थस्स्यात्तर्हि तयोरभेदस्यैव पारमार्थ्यप्रसंगेन प्रसक्ताक्षेपस्य कथं प्रतिक्षेपसिद्धिः । अथ जीवेश्वरयोरविद्यया कल्पितयोः बिंबप्रतिबिंबयोरिव धर्मोव्यवस्थितः । अतोहिताहितादियोगो जीवस्यैव धर्मः । न तस्य जगत्कर्तृत्वं । ईश्वरस्यतु नहिताहितादियोगः । तस्यैव जगत्कर्तृत्वं वयमभ्युपगच्छामः । अतोनोक्तचोद्यावकाश इति सूत्राशय इति चेन्नै-

तद्युक्तं। यतोदृष्टान्तेबिंबप्रतिबिंबयोरचेतनयोः परस्परज्ञानाभावेऽपि दार्ष्टांतिके ईश्वरस्य सर्वज्ञतायाः "यस्सर्वज्ञस्सर्ववित्" इत्यादिश्रुतिसिद्धतया समस्तशास्त्रयोनिभूतस्येश्वरस्य शास्त्रादप्यधिकविषयकज्ञानवत्ताया आवश्यकत्वेन सर्वज्ञतायाः परैरेव शास्त्रयोनित्वाधिकरणे समर्थिततया च वस्तुतस्स्वस्मादनन्यस्य जीवस्य स्वस्मादनन्यत्वेन ज्ञानं सर्वज्ञस्येश्वरस्य दुरपह्नवं। इत्थं च दुःखिनं जीवात्मानं स्वस्मादनन्यत्वेन जानत ईश्वरस्य तद्दुःखहेतुभूतजगत्सृष्टिस्स्वाहितकरणमेवेति जीवेश्वरभेदस्यापरमार्थत्वे ईश्वरस्य स्वाहितकरणादिदोषप्रसंगस्य दुरुद्धरतापत्त्या सूत्रस्य तथाविधभेदपरतादुर्वचा। यत्तु जीवस्यापि हिताहितादियोगोन परमार्थः। अपितु कल्पितः। ततश्चेश्वरस्य सर्वज्ञस्य जीवात्मनि परमार्थतोहिताहितादिलेपाभावं पश्यतोजगत्स्रष्टृत्वेपि न स्वाहितकरणादिदोष प्रसक्तिरिति परिहारवर्णनं; तदत्यंतमयुक्तं; तथासति हितादेरपरमार्थत्वान्न दोषप्रसक्तिरित्येव सूत्रयितव्यत्व प्रसंगात्। प्रसक्ताक्षेपपरिहारक्षमं हेतुमुपेक्ष्य तदक्षमहेतुकथनेन सूत्रकृतामज्ञानातिशयप्रसंगाच्च। अपिच हिताहितादियोगलक्षणस्य संसारबंधस्येश्वरानुग्रहान्निवृत्तिं सूत्रयतस्सूत्रकारस्य संसारबंधमिथ्यात्वाभिप्रायकल्पनमत्यंतानुपपन्नं। मिथ्यात्वेहि ज्ञाननिवर्त्यता स्यात्। न देवताप्रसादनिवर्त्यता। ज्ञानेतरनिवर्त्यस्य मिथ्यात्वायोगात्। संसारबंधस्येश्वरानुग्रहनिवर्त्यत्वमेव सूत्रितं। तथा च संध्याधिकरणे सूत्रं "पराभिध्यानात्तु तिरोहितं ततोह्यस्य बंधविपर्ययाविति" स्वाप्नपदार्थसृष्टिः किं जीवकर्तृका उत ईश्वरकर्तृकेति संशये

जीवात्मकर्तृकेति पूर्वपक्षे प्राप्ते स्वाप्नपदार्थानां संकल्पमात्रेणैव सृष्टेर्वक्तव्यतया जीवात्मनस्संसारदशायां सत्यसंकल्पत्वादिस्वाभाविकरूपस्य तिरोहिततया तस्य तद्दशायां संकल्पमात्रेण सृष्टेरसंभवेन स्वाप्नपदार्थसृष्टिरीश्वरकर्तृकैवेति सिद्धान्तयित्वा जीवात्मनस्स्वाभाविकरूपस्य कुतस्तिरोधानमिति शंकायां जीवात्मनः संसारमोक्षयोरीश्वरसंकल्पकारिततया संसारांतर्गतं स्वरूपतिरोधानमपि तत्संकल्पकारितामिति समाधातुं प्रवृत्तमिदं सूत्रम् । अत्र तुशब्दश्शंकाव्यावृत्त्यर्थः, प्रकरणात्स्वरूपमित्यध्याहार्यं, ततश्चास्य जीवात्मनस्स्वरूपं पराभिध्यानात्=परमात्मसंकल्पात्तिरोहितं हि यतः अस्य बंधविपर्ययौ संसारमोक्षौ ततः परमात्मसंकल्पादेव भवतः इति सूत्रार्थः। अत्राभिध्यानशब्देन संकल्प एव गृह्यते "अभिध्योपदेशाच्च" "तदभिध्यानादेवतुतल्लिंगात्सः" इत्यादिष्वभिध्यभिध्यानशब्दयोस्संकल्पे प्रयोगदर्शनात् ।

अयं भावः—श्वेताश्वतरोपनिषदीश्वरं प्रकृत्य श्रूयते "प्रधानक्षेत्रज्ञपतिर्गुणेशस्संसारमोक्षस्थितिबंधहेतुरिति" प्रधानक्षेत्रज्ञयोः प्रकृतिजीवयोः पतिरीशिता संसारमोक्षस्थितिबंधहेतुः अर्थात्क्षेत्रज्ञस्य संसारबंधाद्योमोक्षः यश्च संसारानुवृत्तिरूपो बंधस्तदुभयहेतुरित्यर्थः अत्र प्रधानक्षेत्रज्ञौ प्रतीशितृत्वमभिधाय क्षेत्रज्ञबंधमोक्षहेतुत्वाभिधानाद्यथालौकिकेश्वरः ईशितव्यचेतनस्य बंधमोक्षहेतुर्भवति तद्वदयं जगदीश्वर इति प्रतीयते; लौकिकेश्वरस्य बंधमोक्षहेतुत्वं कोपप्रसादद्वारकं दृष्टं ततश्च यथा लौकिकः कश्चिदीश्वरः ईशितव्यं चेतनं कृतापराधं कुपितस्स्वीये कारागृहे बध्नाति, प्रसादितश्च बंधनागारा-

न्मोचयति तद्वदयं जगदीश्वरः कृतापराधं क्षेत्रज्ञं कुपितस्स्वीये प्रकृतिकारागृहे बध्नाति, प्रसादितश्च तं प्रकृतिबंधान्मोचयतीति लभ्यते। गुणेशोगुणानां सत्वरजस्तमसां ईशोनियन्ता प्रवर्तक इत्यर्थः। अनेनचेश्वरस्य क्षेत्रज्ञबंधमोक्षहेतुत्वं तत्तदनुगुणगुण प्रवर्तनेनेति लभ्यते। ततश्च कृतापराधं क्षेत्रज्ञं विषयेषु लोभ-मोहजनकरजस्तमःप्रवर्तनेन बध्नाति। अनुष्ठितप्रसदनोपायं च तत्वज्ञानहेतोस्सत्वगुणस्य प्रवर्तनेन संसारबंधान्मोचयती-त्युक्तं भवति। अयमर्थो भगवद्गीतासु स्पष्टमुपदिष्टः—

तानहं द्विषतः क्रूरान्संसारेषु नराधमान्।
क्षिपाम्यजस्रमशुभा नासुरीष्वेव योनिषु॥

तेषामहं समुद्धर्त्ता मृत्युसंसारसागरात्।
भवामि नचिरात्पार्थ मय्यावेशितचेतसाम्॥

मच्चित्तस्सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि।
तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम्॥

इत्यादिना, अतस्संसारमोक्षयोरीश्वरसंकल्पकृतत्वात्संसारांत-र्गतं जीवात्मस्वरूप तिरोधानमपीश्वर संकल्पेनैव कृतमिति। यद्यपि सामान्यतस्संकल्पस्य बंधमोक्षहेतुत्वं सूत्रेऽभिहितम्। तथाप्यौचित्यान्निग्रहसंकल्पस्य बंधहेतुत्वं अनुग्रहसंकल्पस्य मोक्षहेतुत्वमिति व्यवस्थाप्यं। विशेषतश्च तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृति योगाच्च हार्दानुगृहीतश्शताधिकयेति सूत्रे हार्दपरमपुरुषानुग्रहेणोपास-कस्य मोक्षोपक्रमभूतमूर्धन्यनाडीप्रवेशकथनेनेश्वरानुग्रहसंक-ल्पस्य मोक्षहेतुत्वं स्फुटीकृतं। यत्तु अस्य जीवात्मनस्तिरो-

हितमैश्वर्यं पराभिध्यानात् परमेश्वरनिदिध्यासनादाविर्भवति। ततः परमात्मनोह्यस्य बंधविपर्ययौ बंधमोक्षौ भवतः—परमात्मनोऽज्ञानाद्बंधः। तद्ज्ञानाच्च मोक्षः इति सूत्रार्थवर्णनं, तदयुक्तं; श्रुतहानाश्रुतकल्पनाध्याहारादिबहुदोषग्रस्तत्वात्।

तथाहि=पराभिध्यानात्तु तिरोहितमित्यत्र पराभिध्यानस्य तिरोधानं प्रति हेतुत्वं श्रुतं। नत्वाविर्भावंप्रति, ततश्च परकीयव्याख्याने श्रुतहानं अश्रुतकल्पनं अध्याहारश्चेति दोषत्रयं प्रसज्यते। तिरोहितमैश्वर्यं पराभिध्यानादाविर्भवति इत्यर्थवर्णने जीवस्य स्वाप्नपदार्थसृष्ट्युपयुक्तैश्वर्यतिरोधायक एवोत्कटजिज्ञासोदयेन तदनभिधानादवश्यवक्तव्यानुक्तिदोषप्रसंगश्च। ततोह्यस्य बंधविपर्ययाविल्यत्र तत इति तच्छब्देन पराभिध्यानादिति पूर्वप्रस्तुतस्य प्रधानस्याभिध्यानस्यैव परामर्शस्य स्वारसिकतया समासोपसर्जनतयाऽप्रधानपरमात्म परामर्शकतामाश्रित्यार्थवर्णने स्वारसिकार्थपरित्यागः; अस्वारसिकार्थकल्पनं; परमात्मा ज्ञानेन बंधः, तज्ज्ञानेन मोक्ष इत्यर्थस्य सूत्राक्षरैरलाभादुदक्षरताच। तदोकोऽग्रज्वलनं तत्प्रकाशितद्वार इत्यादि सूत्रे सूत्रकारैरीश्वरानुग्रहान्मुक्त्युपक्रमभूत मूर्धन्यनाडीप्रवेश कथनमुखेन, ततोह्यस्य बंधविपर्ययाविति प्रकृतसूत्र खण्डोपात्तयोर्बंधमोक्षयोरेकतरं मोक्षं प्रतीश्वरानुग्रहस्य हेतुतायाः स्फुटीकृतत्वेन तद्विरोधप्रसंगश्च। अतः पराभिध्यानादित्यादि सूत्रस्य प्रागुक्त एव सूत्रकृदाभिप्रेतोऽर्थः। इत्थं चात्र संसारबंधस्य तत्वज्ञानेतरनिवर्त्यत्वाभिधानेन तस्य परमार्थत्वमेव सूत्रकाराभिमतं। नमिथ्यात्वं। तथा जीवात्मनस्संसारबंधमोक्षयोरीश्वर निग्रहानुग्रहाधीनत्वाभिधा-

नेन जीवेश्वरभेदस्यापि परमार्थत्वमेव तदभिमतामिति निश्चीयते। न हि निग्राह्यनिग्राहकयोरनुग्राह्यानुग्राहकयोर्वा स्वरूपैक्यं कश्चिदभिप्रेयात् अन्यत्रोन्मत्तात्। अतो हिताहितादियोगलक्षणस्य संसारस्यापरमार्थत्वाभिप्रायकल्पनेन जीवाभिन्नस्येश्वरस्य जगत्स्रष्टृत्वे स्वाहितकरणादि दोषप्रसंग परिहारवर्णनमयुक्तमेव। अतो जीवेश्वरभेदस्य परमार्थतामंतराप्रसक्ताक्षेपपरिहारासंभवेन तयोः परमार्थभेद एवात्राभिधीयत इत्यास्थेयं। अपि चात्राभिधीयमानस्य जीवेश्वरभेदस्यापरमार्थत्वं तयोस्स्वरूपैक्ये सति स्यात्। तयोस्स्वरूपैक्यमनुपपन्नमिति च समनन्तरसूत्रे अश्मादिवच्च तदनुपपत्तिरित्यत्र सूत्रकारैरेव प्रतिपादितं। अतस्तयोर्भेदस्य परमार्थत्वमेव सूत्रकाराभिमतं। यत्तु अखण्डैकरूपे ब्रह्मणि कथं जीवेश्वरवैचित्र्यमित्याशंकां दृष्टान्तैः परिहर्तुमिदं सूत्रं, पृथिवीत्वसामान्यान्वितानामप्यश्मनां वज्रवैडूर्य सूर्यकान्त केवलपाषाणादि वैचित्र्यवद्ब्रह्मणोपि जेवेश्वरवैचित्र्यमुपपद्यते, अतस्तदनुपपत्तिः, परपरिकल्पित दोषानुपपत्तिरित्यश्मादिवच्चेत्यादि सूत्रस्यार्थवर्णनं। तदयुक्तं। अधिकंतुभेदानिर्देशादिति पूर्वसूत्रे जगत्कारणं ब्रह्म जीवादधिकमित्येतावत एव प्रतिपादितत्वेनाखण्डैकरूपस्य ब्रह्मणो जीवेश्वरभेदेन वैचित्र्यस्य तत्रानुक्ततयोक्तशंकाया एवानुत्थानात्। जीवेश्वर वैचित्र्योपपादनस्य प्रसक्ताक्षेप प्रतिक्षेपकत्वासंभवेन तद्वैयर्थ्याच्च। स्वानन्यत्वेन ज्ञायमानस्य जीवस्य दुःखोत्पादनेनेश्वरस्य स्वाहितकरणदोष प्रसंग इति ह्याक्षेपः प्रसक्तः। ईश्वरस्य जीवदुःखोत्पादनस्य स्वाहितकरणरूपत्वं दुःख्यतो दुःखोत्पादकस्य स्वानन्यत्व-

ज्ञाननिबंधनं न तु तयोरवैचित्र्यनिबंधनं। अवैचित्र्यस्य तत्राप्रयोजकत्वात्। इत्थं च प्रकृते जीवेश्वरयोरनन्यत्वे तद्वैचित्र्योपपादनमनुपयुक्तमेव। अपि च सूत्रे वैचित्र्यामिति पदाध्याहारप्रसंगः। तदनुपपत्तिरित्यस्य परोक्तदोषानुपपत्तिरित्यर्थांगीकारे अश्मादिवच्चेत्येतावतैव दोषस्योद्धृतत्वेन शेषवैयर्थ्यं च। अतोयथोक्त एव सूत्रार्थः। अतोधिकं तु भेदनिर्देशादित्यादि सूत्रद्वयेन जीवेश्वरयोः परमार्थभेद एव प्रतिपाद्यते। नत्वविद्याकल्पितोऽपरमार्थभेदः। अपि चात्र सूत्रकारैस्तयोः कल्पितो भेदः प्रतिपाद्यत इति कथमवगम्यते नह्यस्मिन् शास्त्रे तयोस्स्वरूपैक्य प्रतिपादकं किंचित्सूत्रमुपलभ्यते। यद्बलेनास्य सूत्रस्य कल्पितभेद प्रतिपादकत्वमाश्रयणीयं भवेत्। यत्तु शास्त्रदृष्ट्यातूपदेशो वामदेववदिति सूत्रे जीवेश्वरयोस्स्वरूपैक्यमेव श्रुत्यर्थ इति सूत्रितमिति। तन्न। न हि तयोस्स्वरूपैक्याभ्युपगममंतरा तत्सूत्रस्यानुपपन्नता। अर्थांतरपरतया तदुपपत्तेः। अर्थांतरं च प्रागेव दर्शितं।

यदपि "आत्मेति तूपगच्छान्ति ग्राहयन्ति चेति" सूत्रे तयोस्स्वरूपैक्यं श्रुत्यर्थ इति सिद्धान्तितमिति, तदपि न। तत्सूत्रस्य तयोश्शरीरात्मभावरूपतादात्म्य प्रतिपादनपरतया तेन तयोस्स्वरूपैक्यस्य सिद्धान्तितत्वासिद्धेः। तत्रह्युपास्यः परमात्मा उपासकेन किं स्वस्मादन्यत्वेनोपास्यः ? किंवा अहमितीति संशये जीवात्मपरमात्मनोस्स्वरूपभेदस्य बहुश्रुतिसिद्धतया स्वस्मादन्यस्याहमित्युपासने तस्य भ्रान्तित्वापाताद्भ्रमात्मकोपासनस्य मोक्षसाधनत्वायोगात्। पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेतीति ईश्वरस्य स्वस्मा-

दन्यत्वेनोपासनस्यैव मोक्षोपायताविधानाच्च स्वस्मादन्यत्वेनैवोपास्य इति पूर्वपक्षे प्राप्ते सिद्धान्त उच्यते । "आत्मेतितूपगच्छन्ति ग्राहयंति चेति" । आत्मेति अहमित्युपगच्छन्ति उपासते पूर्वे उपासितारः । परमात्मनो जीववाच्यहं शब्दवाच्यतां ग्राहयन्ति उपपादयन्ति च शास्त्राणीति सूत्रार्थः । अयं भावः—त्वं वा अहमस्मि भगवोदेवते अहं वै त्वमसि भगवोदेवते तद्योहं सोसौ योऽसौसो हमिति पूर्वैरुपासितृभिः परमात्मनोऽहमित्युपासितत्वश्रवणात् । य आत्मनितिष्ठन्नात्मनोंतरोयमात्मा नवेद यस्यात्मा शरीरं य आत्मानमंतरोयमयत्येषत आत्मांतर्याम्यमृतः । इत्यादिभिश्शास्त्रैर्जीवात्मपरमात्मनोश्शरीरात्मभावं प्रतिपादयद्भिः परमात्मनो जीववाच्यहं शब्दवाच्यताया उपपादितत्वाच्चोपासकेन जीवेन परमात्मा अहमित्येवोपास्यः । न चोदाहृतशास्त्रेषु जीवात्म परमात्मनोश्शरीरात्मभाव प्रतिपादनमात्रेण कथं परमात्मनो जीववाच्यहं शब्दवाच्यताया उपपादितत्वसिद्धिरिति वाच्यं । शरीरवाचकानां शब्दानां शरीरिपर्यंतवाचकताया देवोमनुष्यः पुरुषोयोषिदित्यादि शब्देषु व्युत्पत्तिसिद्धत्वाज्जीवात्मनः परमात्मशरीरत्वे प्रतिपादिते जीववाचिशब्दानां परमात्मपर्यंतवाचकताया उपपादितत्वसिद्धेः । न चेदृशोपासनस्य भ्रान्तित्वप्रसंगः । जीवेश्वरयोस्स्वरूपैक्याविषयकत्वात् । अत्र ह्युपासने परमात्मा स्वशरीरकत्वेनैवोपास्यते, न वा पृथगात्मानं प्रेरितारं चेत्यादि श्रुत्यंतरविरोधः । शरीरशरीरिभावस्य भेदनियतत्वेन स्वशरीरकत्वेन परमात्मोपासने पृथक्त्वानुसंधानसिद्धेरिति ।

इदमत्रावधेयं । अतत्वविदां लौकिकानामहं बुद्धिस्स्वात्ममात्रविषयिणी । तत्वविदां पुनस्स्वात्मद्वारा परमात्मपर्यवसायिनी । जीवात्मनः परमात्मा पृथक्सिद्धविशेषणतैक स्वरूपतया यथावस्थितस्व स्वरूपानुसंधाने परमात्मा पृथक्सिद्धविशेषणतयैवानुसंधेयत्वात् । जीवात्मनः परमात्मा पृथक्सिद्धविशेषणतैकस्वरूपत्वं पुनः य आत्मनितिष्ठन्नात्मनोऽतरोयमात्मा न वेदयस्यात्मा शरीरमित्यादिश्रुति सिद्धं । अत्र हि जीवात्मनः परमात्मानं प्रति शरीरत्वमाम्नायते । तच्च चेतनं प्रत्यपृथक्सिद्धद्रव्यत्वं । अन्यादृश शरीरलक्षणानामव्याप्त्यादिग्रस्तत्वात् । यथा चैतत्तथाप्रपंचितमन्यत्र । अपृथक्सिद्धिश्च देहात्मनोर्गुणगुणिनोः क्रियातद्वतोश्च संबंधविशेषः । तथा च तत्वविदामहं बुद्धिरहंत्वेन स्वात्मानमवगाहमाना तदपृथक्सिद्धविशेष्यं परमात्मानमप्यवगाहते । यथा तत्वविदग्रेमरस्य प्रह्लादस्य । सर्वगत्वादनंतस्य स एवाहमवस्थितः । मत्तस्सर्वमहं सर्वं मयि सर्वं सनातन इति । अत्र स एवाहमितीश्वरवाचिनस्तच्छब्दस्य जीवविशेषवाचिनोहं शब्दस्य चैकार्थवृत्तित्वरूप सामानाधिकरण्ये सर्वगत्वादनंतस्येतीश्वरस्य सर्वव्यापित्वं हेतुतयोक्तं । व्याप्तिश्चात्रात्मतया विवक्षिता । देवामनुष्याः पशवः पक्षिवृक्षसरीसृपाः । रूपमेतदनंतस्य विष्णोर्भिन्नामिवस्थितं । इत्यादिनास्मिन्नेव प्रकरणे पूर्वमीश्वरस्य सर्वं प्रत्यात्मतायास्सर्वस्य चेश्वरं प्रति शरीरताया-श्चोक्तत्वात् । ततश्च शरीरात्मभावरूपं तादात्म्यमुक्त सामानाधिकरण्य निबंधनमिति फलितं । ततश्च स एवाहमित्यस्य स ईश्वर एवाहं मदंतरात्मा इत्यर्थः फलितः । एतावता स्ववा-

च्याहं शब्दस्येश्वरपर्यंतताभनुसंधाय मत्तस्सर्वमित्याद्यनुसंहितं। अतोयथावस्थितात्मस्वरूपानुसंधाने परमात्मापृथक्सिद्धविशेषणतयैव स्वात्मनोनुसंधेयतया उपासकेन परमात्मा अहमित्येवोपास्य इति।

यत्तु किं स्वात्मैक्येनेश्वरः प्रतिपत्तव्यः किं वा स्वस्मादन्यत्वेनेति भेदाभेदश्रुतिभ्यां संशये स्वात्मैक्येनैवेश्वरः प्रतिपत्तव्यः न तु स्वस्मादन्यत्वेनेति सिद्धान्तोऽनेन सूत्रेण क्रियते। ध्यात्रापरमेश्वर आत्मेत्येव प्रतिपत्तव्यः। तथा ह्यात्मत्वेनैवैतमुपगच्छंति जाबालाः। त्वं वा अहमस्मि भगवोदेवते इत्यादिना। ग्राहयन्ति चात्मत्वेनैवेश्वरं वेदान्तवाक्यानि। एषत आत्मा सर्वांतरः। स आत्मा तत्त्वमसीत्यादीनीत्युक्त सूत्रार्थ इति व्याख्यानं, तदयुक्तं। भेदश्रवणात्स्वस्मादन्यत्वेनेश्वरः प्रतिपत्तव्य इति पूर्वपक्षस्या भेदश्रवणात्स्वात्मैक्येन प्रतिपत्तव्य इत्येतावन्मात्रेण निरासासंभवात्। भेदाभेदयोरुभयोरपि श्रुतिसिद्धत्वेऽविशिष्टे अभेद एव ग्राह्योनभेद इत्यत्र नियामकाभावेन सिद्धान्तासंगति प्रसंगात। यत्तु भेदश्रुतेरनुवादरूपतया न तत्वावेदकता। अभेदश्रुतेस्तु विधिरूपत्वात्तत्वावेदकत्वमिति तयोर्वैषम्यमिति सूत्रकाराशय इति, तन्न। नेतरोऽनुपपत्तेः। अनुपपत्तेस्तु न शारीरः। न च स्मार्तमतद्धर्माभिलापाच्छारीरश्च। इतरपरामर्शात्स इति चेन्नासंभवात्। इत्यादिषु सूत्रेषु जीवात्मन्यनुपपद्यमानत्वेनाभिहितानां तद्विषयश्रुतिवाक्योक्तानामीश्वरधर्माणां तन्निबंधन जीवेश्वरभेदस्य च प्रत्यक्षादि प्रमाणांतरेण

प्राप्त्यसंभवेन तथाविधभेदवादिनीनां श्रुतीनामनुवादत्वायोगेन सूत्रकाराणामुक्ताशयकल्पनाऽयोगात् । यदपि स्वतोनिर्विशेषं ब्रह्म । विशेषास्त्वपरमार्थतत्तदुपाधि संबंधनिबंधना अपरमार्थाः । ते च तथातथोपासनार्थमुपदिश्यंते । अतोभेदश्रुतय उपासनार्थाः । अभेदश्रुतयस्तु स्वरूपोपदेशपरा इति सूत्रकारैरेव उभयलिंगाधिकरणे स्थापितं । तथा आरंभणाधिकरणे ब्रह्मव्यतिरिक्तस्य कृत्स्नस्य मिथ्यात्वव्यवस्थापनाज्जीवत्वस्यापि मिथ्यात्वं सिद्धं । अतोऽपरमार्थविषयाभेदश्रुतयः । अभेदश्रुतयस्तु परमार्थविषया इतीदृशं वैषम्यमभिप्रेत्य भेदाभेदयोरुभयोरपि श्रुतिसिद्धत्वाविशेषेप्यभेद एव प्रतिपत्तव्य इति सिद्धान्तकथनमुपपन्नमेवेति । तदपि न । उभयलिंगाधिकरणे ब्रह्मणो निर्विशेषत्वादीनामारंभणाधिकरणे ब्रह्मव्यतिरिक्तकृत्स्नमिथ्यात्वस्यच सूत्रकारैर्व्यवस्थापितत्वस्यैवा सिद्धेः ॥

तथाहि—मनुष्यादिशरीरेष्वंतर्यामितयावस्थितस्येश्वरस्य जीवस्येव तत्तद्देहसंबंधप्रयुक्तापुरुषार्थसंबंधोऽवर्जनीयः यद्यपीश्वरस्य तत्तद्देहान्तःप्रवेशस्स्वेच्छाकृतः । न तु जीवस्येव कर्मकृतः । तथापि देहस्य नानाविधाशुचिमयत्वेनात्यंतहेयतया तदंतःप्रवेशे वस्तुस्वभावायत्तोऽपुरुषार्थसंबंधोदुस्त्यज एव । न हि स्वेच्छाकृतमपि पूयशोणितादिमज्जनमपुरुषार्थाय नभवतीति पूर्वपक्षे प्राप्ते सिद्धान्त उक्तः । "नस्थानतोपिपरस्योभयलिंगं सर्वत्रहीति"। अत्र नस्थानतोपिपरस्येत्यनंतरं दोषा इति पदमध्याहार्यं । पूर्वाधिकरणेषु जीवस्य जाग्रदाद्यवस्थाहेतुदेह संबंधनिबंधनदोषाणां निरूपितत्वेन तेषामेवात्र निषेधविवक्षायास्स्वरसतः प्रतीतेः । ततश्च

परस्य ब्रह्मणः स्थानतोपि मनुष्यादि तत्तद्देहेष्ववस्थानादपि न दोषाः। तत्तद्देहसंबंध प्रयुक्तदोषानप्रसज्यन्ते। हि यतः परं ब्रह्म सर्वत्र श्रुतिस्मृतिषूभयलिंगं दोषप्रत्यनीकत्वकल्याण-गुणाकरत्वोभयलक्षणमभिधीयत इति सूत्रार्थः।

अयंभावः। परमात्मा तावत्। अपहतपाप्मा विजरो-विमृत्युर्विशोको विजिघत्सोऽपिपासस्सत्यकामस्सत्यसंकल्पः। समस्तहेयरहितं विष्ण्वाख्यं परमंपदं। समस्तकल्याणगुणा-त्मकोसावित्यादिषु श्रुतिस्मृतिषु स्वतोनिरस्तनिखिलदोषतया कल्याणगुणाकरतया चाभिधीयते। अतस्सत्यपि देहसंबंधे परमात्मा निर्दोष एवेति। यद्यपि देहसंबंधनिबंधनापुरुषार्थ-स्यावर्जनीयताशंकायामीश्वरस्य दोषप्रत्यनीकत्वरूपस्वभाववि-शेषस्यैव तत्परिहारौपयिकतयोभयलिंगत्वोक्तिरनुपयुक्ता। तथा-पि ज्ञानशक्त्यादि कल्याणगुणानामपि दोषप्रत्यनीकतया तेषा-मपि दोषसंस्पर्शशंकापरिहारौपयिकत्वमक्षतमिति तदुक्तिरिति बोध्यं। उभयलिंगत्वश्रुतेरन्यथासिद्धिमाशंक्य परिहृतं "भेदा-दिति चेन्नप्रत्येकमतद्वचनादिति"। भेदान्मनुष्यादिशरीरसं-बंधरूपावस्थाभेदाद पुरुषार्थसंबंधः परस्यावर्जनीय इति चेन्नै-षदोषः प्रत्येकं प्रतिवस्तु अतद्वचनात्। दोषासंस्पृष्टत्ववचना-दिति सूत्रार्थः।

अयंभावः। जीवात्मनोपि प्रजापतिविद्याया मपहतपा-प्मत्वाद्युभयलिंगत्वं श्रूयते। तथापि तस्य मनुष्यादिदेहसंबंधि-त्वरूपावस्था भेदाद्यथाऽपुरुषार्थयोगः। तथा परमात्मनोपि शरी-रसंबंधदशायां वस्तुस्वभावप्रयुक्ता पुरुषार्थयोगो दुर्वार इति न शंकनीयं। परमात्मनः पृथिव्यादि तत्तद्वस्तुष्वंतर्यामितया-

वस्थानदशायामपि तत्तद्वस्तुसंबंधप्रयुक्तदोषासंस्पर्शित्वश्रवणात् । श्रूयतेह्यंतर्यामिब्राह्मणे यः पृथिव्यां तिष्ठन्नित्यारभ्य प्रतिपर्यायं सत आत्मांतर्याम्यमृत इति । अत्रामृतशब्दस्य प्रतिपर्यायमावृत्त्या परमात्मनस्तत्तद्वस्तुसंबंधित्वेपि तत्संबंधप्रयुक्तदोषाभावविवक्षा ज्ञायते । नित्यत्वविवक्षायामसकृत्प्रयोगवैयर्थ्यात् । अतः परमात्मविषया उभयलिंगत्व श्रुतिर्नावस्थाभेदेन निर्वोढुं शक्या। जीवात्मनस्तु कर्मवश्यतयाऽपहतपाप्मत्वादिकं तदीयं कर्मणा तिरोहितमित्युक्तं पराभिध्यानात्त्वित्यत्र । अतस्तस्य देहसंबंधदशायामपुरुषार्थयोगः । देहादिसंबंधस्य अपुरुषार्थहेतुत्वमपि न वस्तुस्वभावप्रयुक्तं । अपि तु कर्मप्रयुक्तं । वस्तुस्वभावप्रयुक्तत्वे सर्वस्य वस्तुनस्सर्वदा सुखहेतुत्वं दुःखहेतुत्वं वा नियमेनस्यान्नचैवं दृश्यत इति । एकस्मिन्देहे द्वयोरवस्थानेपि जीवस्य देहयोगादपुरुषार्थयोगः। परमात्मनस्त्वपुरुषार्थसंबंधगंधं विनैवावस्थानमिति श्रुत्यंतरेस्पष्टमेवोक्तमित्युक्तं । अपिचैवमेके इति । एके शाखिनः "द्वासुपर्णासयुजासखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलंस्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीतीति" मंत्रे इममर्थमाहुरिति सूत्रार्थः । अस्तु मनुष्यादिशरीरयोगिनोऽपुरुषार्थसंबंधः कर्माधीनः । तथापीश्वरस्य जीवस्येव कर्मवश्यत्वमप्यवर्जनीयं । जीवस्य ब्राह्मणक्षत्रियादिनामरूपभाक्त्वाद्धि ब्राह्मणो बृहस्पतिसवेन यजेतेत्यादिविधि निषेधविषयतया कर्मवश्यत्वं ब्राह्मणक्षत्रियादिनामरूपयोः परमात्मपर्यंतताया नामरूपव्याकरणश्रुतिसिद्धतया परमात्मनोपि तत्तन्नामरूपभाक्त्वाद्विधि निषेधविषयत्वं दुर्वारमित्याशंकायामुक्तं । "अरूपवदेव-

हितत्प्रधानत्वादिति"। तद्ब्रह्म अरूपवदेव रूपरहित तुल्यमेव भवति प्रधानत्वात्। नामरूपनिर्वाहकत्वादिति सूत्रार्थः। अयंभावः। आकाशोहवै नामरूपयोर्निर्वहितातेयदंतरेति श्रुत्या ब्रह्मणोनामरूप निर्वोढृत्वस्य नामरूपकार्यास्पृष्टत्वस्य चाभिधानात् न तस्य कर्मवश्यता परमात्मनो जीवद्वारादेवमनुष्यादिनामरूपभाक्त्वेन ब्राह्मणादि शब्दवाच्यत्वेपि ब्राह्मणोयजेतेत्यादौ विधिनिषेधबोध्ययोः प्रवर्तनानिवर्तनयोः परमात्मन्यन्वयोनसंभवति। शासनीयोहि प्रवर्तनानिवर्तनयोर्विषयो भवति। सर्वशासिता परमात्मातु नकेनचिच्छासनीयः। अतः परमात्मनि प्रवर्तनानिवर्तनयोरन्वययोग्यताविरहेण परमात्मविशेषणतया ब्राह्मणादिशब्दबोध्ये जीवात्मन्येव तदन्वय इति जीवात्मन एव नामरूपसंबंधप्रयुक्तविधि निषेधवश्यता। तदभावात्परमात्मनो नामरूपराहिततुल्यतैव इति। एवं सूत्रत्रयेण परमात्मनो जीवस्येवापहतपाप्मत्वादीनामवस्थाभेदेन तिरोभावाविर्भाव योग्यतयाऽन्यथासिद्धिशंकापरिहृता। कल्याणगुणानाम तात्विकत्वेन गुणश्रुतेरन्यथासिद्धि शंकापरिहारायोक्तं। "प्रकाशवच्चावैयर्थ्यादित्यादि"॥

इत्थमत्राशंका—सत्यं ज्ञानमनन्तं ब्रह्मेत्यादिश्रुतिषु ब्रह्मणो ज्ञानस्वरूपत्वमभिधीयते। अतोज्ञानस्वरूपस्य ब्रह्मणः संकल्पाद्याश्रयत्वाभावोऽर्थसामर्थ्यसिद्धः। न हि ज्ञानस्य संकल्पाद्याश्रयत्वमुपपद्यत इति। सूत्रार्थस्तु प्रकाशवत् ज्ञानस्वरूपत्ववत् अवैयर्थ्यात् श्रुतिवैयर्थ्यपरिहारार्थं संकल्पाद्याश्रयत्वमपि ब्रह्मणोभ्युपगन्तव्यामिति। अयंभावः। यथाज्ञानस्वरूपत्वं ब्रह्मणश्श्रूयते, तथा ज्ञानसंकल्पाद्याश्रयत्वमपि

श्रूयते। यस्सर्वज्ञस्सर्ववित्। सत्यकामस्सत्यसंकल्प इत्यादिषु। अत उभयश्रुतिवैयर्थ्यपरिहाराय ब्रह्मणो ज्ञानस्वरूपत्ववत् ज्ञानसंकल्पाद्याश्रयत्वमपि स्वीकार्यमिति। ननूक्तं ब्रह्मणो ज्ञानस्वरूपत्वोक्त्या ज्ञानसंकल्पाद्याश्रयत्वाभावोऽर्थसिद्धः। ज्ञानस्य ज्ञानांतराश्रयत्वायोगादिति। अतोऽर्थसिद्धेन गुणनिषेधेन सर्वज्ञत्वादि श्रुतीनामतात्विकगुणपरत्वमाश्रयणीयमित्याशंकां परिहर्तुमुक्तं—"आह्च तन्मात्रमिति"। सत्यं ज्ञानमनन्तं ब्रह्मेति श्रुतिर्ब्रह्मणो ज्ञानस्वरूपतामात्रं प्रतिपादयति न तु ज्ञानाद्याश्रयत्वं निषेधति। न च ज्ञानस्वरूपतामात्रप्रतिपादनेन ज्ञानाद्याश्रयत्वा भावासिद्धिस्सुवचा। तेजोरूपस्यादित्यादेः प्रभा रूपतेजोंतराश्रयत्ववत् ज्ञानस्वरूपस्य ब्रह्मणो ज्ञानांतराश्रयत्वे विरोधाभावादिति सूत्राशयः। एवमार्थगुणनिषेध शंका शमिता। श्रौतगुणनिषेधशंकां निराकर्तुमभिहितं। "दर्शयति चाथो अपिस्मर्यत" इति। अत्र वेदान्त इत्यध्याहार्यं। वेदान्तः अथोकात्स्न्र्येन ब्रह्मणो निरस्तनिखिलदोषत्वं कल्याणगुणाकरत्वं च दर्शयति, स्मर्यतेपि। स्मृतिष्वपीदमुभयं प्रतिपाद्यत इत्यर्थः।

अयंभावः। यद्यपि निर्गुणंनिरंजनमित्यादौ गुण सामान्यनिषेधश्श्रूयते। तथापि परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रियाचेत्यादि वेदान्तगणेन सर्वज्ञस्सर्वदृक्सर्वशक्तिर्ज्ञानबलार्धिमानित्यादिस्मृतिभिश्च ब्रह्मणो ज्ञानानंदादि स्वाभाविककल्याणगुणाश्रयत्वस्यापि प्रतिपादनेन सामान्यनिषेधस्य विहितव्यतिरिक्तहेय गुणविषयत्वमाश्रयणीयमिति भावः। एवं श्रौतार्थगुणनिषेधाभ्यां गुणानामतात्विक-

त्वेनोभयलिंगत्व श्रुतेरन्यथा सिद्धतां निरस्य दृष्टांतविशेषोपादानेन ब्रह्मगुणानामतात्विकत्वासिध्या तस्या अन्यथासिद्धत्वशंकां निरसितुमुक्तं। "अत एव चोपमासूर्यकादिवदिति" ॥

अत्रेयमाशंकाविवक्षिता। आकाशमेकं हि यथा घटादिषु पृथग्भवेत्। तथात्मैकोप्यनेकस्थो जलाधारेष्विवांशुमान्। इति परमात्मनोजलगतसूर्य प्रतिबिंबो दृष्टान्ततयोपादीयते। तेन दृष्टांतेन यथा जलप्रतिबिंबिते सूर्ये जलगतचलनादयो भ्रांत्या प्रतीयंते। तथा परमात्मनि पृथिव्यादि तत्तद्वस्त्वनुप्रवेशात्तेते धर्माभ्रांत्या प्रतीयन्त इति तत्तद्धर्माणामतात्विकत्वमेवेति। अत एवेति। यतः पृथिव्यादि नानास्थानेषु स्थितस्यापि परमात्मनो नतत्संबंधप्रयुक्त दोषभाक्त्वं अत एव सूर्यकादिवत् जलप्रतिबिंबित सूर्यवत्परमात्मेति परमात्मन उपमाक्रियत इति सूत्रार्थः। अयंभावः। नात्रजल सूर्यदृष्टांतेन ब्रह्मगुणानामतात्विकत्वं प्रतिपिपादयिषितं। अपि तु पृथिव्यादिषु तत्तत्स्थानेषु स्थितोपि परमात्मा जलादिप्रतिबिंबित सूर्यवत्तद्गतदोषैर्नस्पृश्यत इत्ययमर्थ उक्तदृष्टांतेन प्रतिपिपादयिषित इति। अत्राक्षेपः कृतः। "अंबुवदग्रहणात्तु नतथात्वमिति"। अंबुवदंबुनि सूर्यादेरिवाग्रहणात् परमात्मनः पृथिव्यादिषु ग्रहणविरहात्तथात्वं न दार्ष्टान्तिकस्य परमात्मनो दृष्टांततुल्यत्वं नसंभवतीत्यर्थः। अयंभावः। सूर्यादिर्जलादिषु वस्तुतोऽनवस्थितोपि भ्रांत्या तत्रावस्थित इव गृह्यते। परमात्मातु वस्तुतस्तत्रतत्र स्थित एव गृह्यते यः पृथिव्यां तिष्ठन्नित्यादिभिस्तथावगमात्। अतो विषमोयं दृष्टांतः। सूर्यादेर्जलगतदोषास्पर्शो वस्तुतस्तत्र स्थित्यभावात् इहतु परमात्मनस्तत्र-

तत्र वस्तुतस्थितिरिति । अतो दृष्टांततुल्यतोपपत्तये परमात्मनस्तत्तत्र स्थित्यभावोभ्युपगंतव्य इति । अत्र समाहितं । "वृद्धिह्रासभाक्त्वमंतर्भावादुभयसामंजस्यादेवं दर्शनाच्चेति"। परमात्मनोंतर्भावात्। पृथिव्यादिष्वंतरवस्थानाद्वृद्धिह्रासभाक्त्वं सूर्यदृष्टांतेन निवर्त्यतया विवक्षितं । उभयसामंजस्यात् आकाशसूर्यरूप दृष्टांतद्वयस्य सामंजस्य सिद्धिबलादेवं उक्तविवक्षा निश्चीयते । दर्शनाच्च विवक्षितयत्किंचिदंशे साधर्म्यमात्रेण दृष्टांतोपादान दर्शनाच्चैवं निश्चीयत इति सूत्रार्थः ॥

अयंभावः । आकाशमेकं हि यथेति पूर्वोक्तवचने परमात्मनो जलप्रतिबिंबित सूर्यदृष्टांतोपादानेन परमात्मनः पृथिव्यादिषु वस्तुतस्थित्यनभ्युपगमे तत्रोपात्ताकाशदृष्टांतो नघटते । आकाशो हि वस्तुतो घटकरकादिषु स्थित एव । अतो दृष्टांतद्वयोपादान स्वारस्यादुभयानुगतेन केनचिदाकारेण तदुभयसादृश्यमेव परमात्मनो विवक्षितमित्यास्थेयं सचाकारस्तत्तद्गतदोषास्पर्श एव । वस्तुनस्तत्तद्वस्तुसंसर्गकृततदीयदोष संबंधो हि देशकालसंनिकर्षे दोषलेपार्हस्वभावे च सति भवति । आकाशस्य लेपार्हस्वभावविरहात् घटकरकादिगत वृद्धिह्रासादिदोषास्पर्शः । सूर्यस्य तु देशसंनिकर्षविरहाज्जलगत तथाविधदोषास्पर्शः । अनेन दृष्टांतद्वयेन देशकालसंनिकर्षदोषलेपार्हस्वभावैतत्त्रितयं संभूय संसर्गकृतदोषसंबंधे हेतुः। तत्रैकैकाभावेपि न तत्संबंध इति लभ्यते । ततश्च परमात्मनि लेपार्हस्वभावविरहात्तत्संसर्गकृतदोषास्पर्श इत्युक्तवचनाभिप्राय इति । द्वेवावब्रह्मणो रूपे इत्यादिना ब्रह्मणो रूपद्वयमाकारविशेषं चोपदिश्याथात आदेशो नेतिनेतीति पूर्वोक्त

सर्वाकारनिषेधात्परमात्मनो रूपगुणादेस्सर्वस्यापरमार्थत्व सिद्ध्या पुनरप्युभयलिंगत्व श्रुतेर्गुणानामतात्विकत्वेनान्यथा सिद्धिशंका। प्रकृतैतावत्त्वं हि प्रतिषेधति ततोब्रवीति च भूय इति सूत्रेण शमिता। सूत्रस्यार्थोभावश्च प्रागेवविवृतौ। द्वेवावब्रह्मणो रूपे इत्यादिना ब्रह्मणो रूपद्वयोक्तिरनुवादरूपेत्या शंकायामुक्तं। "तदव्यक्तमाहहीति"। तद्ब्रह्माव्यक्तं प्रमाणांतरेण नव्यज्यते। प्रमाणांतराविषय इति यावत्। आहहि शास्त्रं। न चक्षुणा गृह्यते नापि वाचेत्यादि इति सूत्रार्थः। ब्रह्मणः प्रत्यक्षादि प्रमाणांतरा गोचरतया मूर्तामूर्तादीनां ब्रह्मसंबंधित्वस्य प्रमाणांतरेण ज्ञातत्वासंभवेनानुवादत्वमुक्त श्रुतेर्न संभवतीति भावः। पूर्वसूत्रोक्तं प्रत्यक्षादि प्रमाणांतरागोचरत्वमेव दृढीकर्तुमुक्तं। अपि संराधने प्रत्यक्षानुमानाभ्यामिति। अपि च संराधने सम्यक्प्रीणने भक्तिरूपतापत्त्या परमात्म प्रीतिजनक इति यावत्। तथाविध उपासने कृत एव परमात्मोपलभ्यत इति प्रत्यक्षानुमानाभ्यां श्रुतिस्मृतिभ्यामवगम्यत इति सूत्रार्थः। यमेवैषवृणुतेतेन लभ्यस्तस्यैष आत्माविवृणुते तनूं स्वामित्यादि श्रुतिभिः। भक्त्यात्वनन्ययाशक्य अहमेवं विधोऽर्जुन। ज्ञातुं द्रष्टुं च तत्वेन प्रवेष्टुंच परंतपेत्यादिस्मृतिभिश्च भक्तिरूपतापन्नोपासनेन विना केनाप्युपायेन परमात्मा नोपलभ्यत इत्यभिधानात्परमात्मनो मूर्तामूर्तादि प्रपंचविशिष्टतायाश्शास्त्रैक समधिगम्यतया द्वेवावब्रह्मणो रूपे इत्यादेर्नानुवादत्वसंभव इति भावः। ब्रह्मणो रूपादिवैशिष्ट्यस्य प्रमाणांतरेणा प्राप्तत्वेनानुवादायोगान्नेतिनेतीत्यस्य गुणानिषेधकत्वमनुपपन्नमित्युक्तं। ब्रह्मणः प्रपंचवैशिष्ट्यस्य तात्विकत्वा-

दपि नेतिनेतीत्यनेन तन्निषेधोनुपपन्न इत्ययमर्थ उक्तः, प्रकाशवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासादिति। अत्र ब्रह्मसाक्षात्कार इत्यध्याहार्यं। ब्रह्मसाक्षात्कारे प्रकाशवत् ज्ञानत्वादिभानवत् प्रपंचवैशिष्टयभानस्याप्यवैशेष्यं, अविशिष्टता श्रूयत इति शेषः। प्रकाशश्च तेषां साक्षात्कारश्च, कर्मण्युपासनरूपे कर्मणि अभ्यासाद्भवतीति सूत्रार्थः; अयमाशयः; "तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्चे"ति वामदेवेन ब्रह्मणि साक्षात्क्रियमाणे ब्रह्मणो ज्ञानानंदत्वादिवैशिष्टयवत् मन्वादिविभूतिवैशिष्टयमपि साक्षात्कृतमिति श्रूयते। अतो-निदिध्यासनजनितब्रह्मसाक्षात्कारेण साक्षात्क्रियमाणत्वाद्यथा ज्ञानानन्दत्वादेः परमार्थता, तथा तेनैव मन्वादिप्रपंचवैशिष्टयस्यापि साक्षात्कृतत्वात्तस्यापि पारमार्थ्यमवश्यमभ्युपगन्तव्यं। अन्यथा ज्ञानानन्दत्वादेरप्यपारमार्थ्यप्रसंगादिति, यत्प्रतिज्ञातं ब्रह्मणः कल्याणगुणविशिष्टत्वं; तदुपसंहृतं "अतोऽनन्तेन तथाहि लिङ्गमिति" अतो ब्रह्मणो गुणवैशिष्टयस्यानन्यथासिद्धप्रमाणप्रतिपन्नत्वाद्ब्रह्मानन्तेन गुणेन विशिष्टं। तथासत्येवहि ब्रह्मणो हेयप्रत्यनीकत्वं कल्याणगुणविशिष्टत्वं चेति द्विविधं लिङ्गं लक्षणमुपपद्यत इति सूत्रार्थः। तदेवमुभयलिंगाधिकरणे ब्रह्मणो निर्विशेषत्वादेर्व्यवस्थापितत्वस्यासिद्धतया प्रत्युत ब्रह्मणोऽपहतपाप्मत्वादि सत्यसंकल्पत्वान्तगुणानां सर्वदाऽतिरोहितत्वस्य जीवात्मसंबंधिनां तेषां कदाचित्तिरोधानस्य च तत्र व्यवस्थापनेन सर्वदाऽतिरोहितस्व रूपस्य कदाचित्तिरोहितस्वरूपस्य चैक्यायोगेन जीवब्रह्मणोर्भेदस्य परमात्मनोऽनन्तकल्याणगुणवत्वस्य च तत्र

व्यवस्थापिततयोभयलिंगाधिकरणं परपक्षप्रातिपक्षभूतमेवेति सिद्धं ॥

यत्तु सर्वकर्मा सर्वकामस्सर्वगन्धस्सर्वरस इत्यादिषु कासुचिच्छ्रुतिषु ब्रह्मणस्सविशेषत्वमभिधीयते । अन्यासुचा स्थूलमनण्वह्रस्वमित्यादिषु निर्विशेषत्वं; तत्र किमुभयश्रुति-बलाद्ब्रह्मणस्सविशेषत्वनिर्विशेषत्वोभयं प्रतिपत्तव्यं; किंवान्य-तरत्; अन्यतरपरिग्रहेऽपि किं सविशेषत्वं; उत निर्विशेषत्व-मितिसंशये उभयश्रवणादुभयं ग्राह्यमिति पूर्वपक्षे सिद्धान्त-माह—नस्थानतोऽपीत्यादि । परस्यब्रह्मणस्स्थानतोऽपि उपा-धितोप्युभयलिंगं सविशेषत्वनिर्विशेषत्वरूपमाकारद्वयं न संभवति । अतोनिर्विशेषत्वमेव ग्राह्यं. हि यतस्सर्वत्राशब्दम-स्पर्शमरूपमव्ययमित्येवमादिष्वपास्तसमस्तविशेषमेव ब्रह्मोप-दिश्यत इति सूत्रार्थः । अयंभावः—स्वतस्तावत्परमात्मनस्स-विशेषत्वं निर्विशेषत्वंचेत्युभयं न संभवति । तयोः परस्पर-विरुद्धत्वेनैकत्र समावेशायोगात । नाप्युपाधितः । नह्येकरूपं वस्तूपाधितोन्यरूपं भवति । नहि स्वच्छस्स्फटिक उपाधियो-गादस्वच्छोभवति । तत्रास्वच्छताप्रतीतेर्भ्रान्तिमात्रत्वात् । अतो-ऽन्यतरस्मिन्ग्राह्येऽशब्दमस्पर्शमित्यादिश्रुतिषु निर्विशेषतयोप-दिश्यमानत्वान्निर्विशेषत्वमेव ग्राह्यमितीत्युक्तसूत्रव्याख्यानं ; तदयुक्तं । सर्वत्रेतिहेतोरेकदेशोक्त्या साध्यस्य सर्वात्मनानु-क्त्याचोक्तरीत्यार्थवर्णने सूत्रस्य न्यूनताप्रसंगात् । उपाधितोपि परस्योभयलिंगं नेत्येतावन्मात्रस्य सूत्रतोलाभेप्यन्यतरपरिग्रहे निर्विशेषमेव ग्राह्यमित्यस्य सूत्रेणालाभाच्च । अध्याहारेण तल्लाभ इति चेत् सविशेषमेव ग्राह्यमित्येवाध्याहारः किं न

स्यात् । सर्वत्रहीति निर्विशेषत्वश्रुतेर्हेतुतयोपात्तत्वेन तद्विरोधप्रसंगान्नोक्तरीत्याऽध्याहारप्रसंग इति तु न युक्तं । अन्योन्याश्रयप्रसंगात् । सर्वत्रहीत्यस्य निर्विशेषश्रुतिपरत्वसिद्धौ निर्विशेषमेव ग्राह्यमिति साध्याध्याहारसिद्धिः । तत्सिद्धौ सर्वत्र हीत्यस्य निर्विशेषश्रुतिपरत्वसिद्धिः । अन्यथा सर्वत्रहीत्यस्य सविशेषश्रुतिपरतायां बाधकाभावात । उत्तरसूत्रेषु निर्विशेषताया उपपादितत्वेन तद्बलादुक्त साध्याध्याहारसिध्या नान्योन्याश्रय इत्यपि न युक्तं, उत्तरसूत्राणामनन्तगुणवत्ताप्रतिपादकताया अनुपदमेव सुष्ठु निरूपितत्वात् । वस्तुतस्तु पूर्वाधिकरणेषु बहुषु ब्रह्मणोऽनन्तगुणवत्ताया एव सूत्रकारैः कण्ठरवेण सूत्रिततया ब्रह्मणो लोकोत्तरगुणवत्तायामेव सूत्रकारतात्पर्यावधारणात्तथाविधतात्पर्यानुगुण्येन सविशेषमेव प्रतिपत्तव्यमित्यध्याहार एव युक्तः । नतु निर्विशेषमेव प्रतिपत्तव्यमिति । सूत्रकारतात्पर्यविरुद्धत्वात् ॥

तथाहि, अन्तराधिकरणे सुखविशिष्टाभिधानादेवचेति सूत्रे ब्रह्मणस्सुखविशिष्टत्वं, सर्वोपेताचतद्दर्शनादिति सूत्रे ब्रह्मणस्सर्वशक्तित्वादिविशिष्टत्वं च सूत्रितं, विवक्षितगुणोपपत्तेश्च, सर्वधर्मोपपत्तेश्चेत्यादि सूत्रेषु परमात्मनस्तत्तद्धर्मवैशिष्ट्यमुपपन्नमित्यभिहितं । धृतेश्चमहिम्नोस्यास्मिन्नुपलब्धेरित्यत्र शासनेन जगद्विधरणस्य महिमरूपत्वं तस्य परमात्मधर्मत्वं च सूत्रितं, एवमन्येष्वप्यधिकरणेषु बहुतरगुणवैशिष्ट्यप्रतिपादनं द्रष्टव्यं । नचैतेष्वधिकरणेषूपासनार्थमपरमार्था एव गुणास्सूत्रकारैरुपदिष्टा इति शक्यं वक्तुं । मानाभावात् , अस्मिन्नुभयलिंगाधिकरणे ब्रह्मणो निर्विशेषत्वस्य सिद्धान्ति-

तत्वात्तत्रापरमार्था एव धर्मा उपासनार्थमुपदिष्टा इति निश्चीयत इति त्वन्योन्याश्रयग्रस्तं । अत्र निर्विशेषत्वस्य सिद्धान्तित्वस्य सिद्धौ पूर्वाधिकरणोक्तब्रह्मधर्माणामपरमार्थत्वसिद्धिः, तत्सिद्धावेतदधिकरणे निर्विशेषत्वस्य सिद्धान्तित्वसिद्धिरिति । अपिच सत्यसंकल्पत्वादीनां किं दोषत्वान्निषेधः; किंवा गुणत्वादेव; नतावद्दोषत्वात्, सत्यसंकल्पत्वादीनां दोषताया अप्रसिद्धेः । नापि गुणत्वात् । दोषत्वेन लोकप्रसिद्धान्धर्मान्ब्रह्मणि निषिध्य गुणत्वेन प्रसिद्धान्धर्मान्महता संरंभेण विदधत्सूत्रकारोऽस्मिन्नधिकरणे गुणान्निषिध्याज्ञानादिदोषांस्तत्र विदधातीत्यस्यात्यंतमश्रद्धेयत्वात् । सूत्रकारोहि दोषतया सुप्रसिद्धे वैषम्यनैर्घृण्ये ब्रह्मणि निषेधति । वैषम्यनैर्घृण्ये न सापेक्षत्वादिति । कल्याणगुणांश्च विधत्ते । सर्वोपेताचतद्दर्शनादिति । परा देवता सर्वैस्सर्वशक्तित्व सत्यसंकल्पत्वादिभिर्लोकविलक्षणैर्गुणैरुपेता युक्ता । तद्दर्शनात्, परास्य शक्तिर्विविधैव श्रूयत इत्यादिश्रुतिभिस्तथा प्रदर्शनादिति सूत्रार्थः । अतोऽस्मिन्सूत्रे उभयलिंगपदस्य सगुणत्वनिर्गुणत्वोभयपरत्वमाश्रित्य तस्य निषेध्यसमर्पकत्वकल्पनं अन्यतरास्मिन् ग्राह्ये निर्गुणत्वमेव ग्राह्यमिति सूत्रकारैरप्रयुक्तं पदमध्याहृत्य गुणनिषेधपरत्वकल्पनंचायुक्तमेव, अतोयथा ब्रह्मणो जगत्कारणत्वप्रयुक्तदोष निराकरणप्रकरणे वैषम्यनैर्घृण्यदोषमाशंक्य निराकृतं, तथाऽत्रापि जीवात्मनो जाग्रदाद्यवस्थासु दोषनिरूपणप्रकरणे परमात्मनस्तत्तदवस्थतच्छरीरेऽवस्थाननिबंधन दोषमाशंक्य निराक्रियत इत्येव युक्तं । ततश्च सूत्रे न स्थानतोऽपि परस्येत्यनन्तरं दोष इति पदमध्याहृत्य स्थानतोपि परस्य न दोष

इत्यंतं प्रतिज्ञापरं। उभयलिंगं सर्वत्रहीतिच हेतुपरमित्येव व्याख्येयं। नकेवलमुक्तैर्हेतुभिरुक्तसूत्रमुक्तरीत्या व्याख्येयं। प्रकृतैतावत्वंहि प्रतिषेधति ततोब्रवीतिचभूय इत्युत्तरसूत्रेण सममविरोधसिद्धयेऽप्युक्तसूत्रमुक्तरीत्या व्याख्येयं। तथाहि, अथात आदेशो नेतिनेतीत्यनेन पूर्ववाक्ये ब्रह्मणो मूर्तामूर्तात्मकरूपद्वयाभिधानेन या इयत्ता प्रकृता, सैव प्रतिषिध्यते, नतु ब्रह्मणोरूपवत्वमित्युक्तं, इत्थंच नस्थानतोपीत्यनेन यदि रूपनिषेधः क्रियेत, तदैकत्र श्रुतिषु ब्रह्मणो रूपनिषेधोक्तिः, अन्यत्र तासु तन्निषेधाभावोक्तिरिति विरोधोदुरुद्धरोभवेत्, एवं प्रकृतैतावत्त्वमित्यस्मिन्सूत्रे नेतिनेतीतिनिषेधस्य पूर्ववाक्यविहितव्यतिरिक्तविषयतामाश्रित्य विधिनिषेधयोः प्रामाण्यमुपपादयता सूत्रकारेण यत्र विधिनिषेधयोर्विरोधस्तत्र विषयव्यवस्थया द्वयोरपि प्रामाण्यमुपपादनीयं, नत्वेकस्य प्रामाण्यमन्यस्याप्रामाण्यं चाश्रयणीयमिति दर्शितं॥

तथा ब्राह्माधिकरणे, ब्राह्मेण जैमिनिरुपन्यासादिभ्य इति सूत्रेण मुक्तोऽपहतपाप्मत्वादि सत्यसंकल्पत्वांतगुणाष्टक विशिष्टात्मनाऽविर्भवति, प्रजापतिविद्यायामात्मनोऽपहतपाप्मत्वादि गुणाष्टकश्रवणेन तद्विशिष्टमेवात्मनस्स्वरूपमित्यवगमादिति जैमिनिमतमुक्त्वा "चितितन्मात्रेणतदात्मकत्वादित्यौडुलोमिरि"त्यनन्तरसूत्रेण स यथा सैंधवघनोऽनन्तरोऽबाह्यः कृत्स्नोरसघन एव, एवंवाऽरे अयमात्मानन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव विज्ञानघन एवेति श्रुतौ विज्ञानघन एवेत्यवधारणेन ज्ञानमात्रमेवात्मनस्स्वरूपमित्यवगमाच्चैतन्यमात्र स्वरूपेणाविर्भवतीत्यौडुलोमिमतमभिधाय एवमप्युपन्या-

सात्पूर्वभावादविरोधं बादरायण इति सूत्रेणात्मनो ज्ञानस्वरूपत्वस्यैव गुणाष्टकवैशिष्ट्यस्यापि श्रुतिप्रतिपन्नतया द्वयोरपि तुल्यप्रमाणकत्वेनैकेनेतरबाधस्यायुक्तत्वादुभयमेवात्मनस्स्वरूपमित्युभयरूपेणाविर्भवतीति स्वसिद्धान्तोऽभिहितः, अनेनापि द्वयोः प्रमाणयोर्विरोधेऽविरुद्धार्थांतराश्रयणेन द्वयोः प्रामाण्यमुपपादनीयं नत्वेकस्याप्यप्रामाण्यमिति दर्शितं, अतो विधिनिषेधयोर्यत्र विरोधस्तत्र विषयभेदेन प्रामाण्योपपादनस्यैव सूत्रकारसंमततया प्रकृते सर्वगन्धस्सर्वरसः, तथाऽरसंनित्यमगंधवच्च यत्, यस्सर्वज्ञस्सर्ववित्, निर्गुणं निरंजनमित्यादीनां विधिनिषेधानां विषयव्यवस्थया प्रामाण्यमेवोपपादनीयं, नत्वेकेनान्यस्य बाधः, संभवतिच द्वयोर्विषयभेदेनाविरोधः। अरसमगन्धवदित्यादेर्निषेधस्य प्राकृतरसगन्धादिर्विषयः, सर्वगन्धस्सर्वरस इत्यादेश्चाप्राकृतरसगन्धादिः नचाप्राकृतस्य रसगन्धादेरप्रामाणिकता, पर्यंकविद्यायां तं ब्रह्मगन्धः प्रविशति ब्रह्मरसः प्रविशतीत्यादिना परञ्योतिरुपसंपन्ने ब्रह्मगन्धरसादिप्रवेशश्रवणेन तत्सिद्धेः, निर्गुणमित्यादेर्निषेधस्य हेयगुणाविषयाः, गुणविधायिनीनांच कल्याणगुणा इति। इत्थं सूत्रकारसंमतदिशा सर्वस्या अपि श्रुतेः प्रामाण्यनिर्वाहसंभवे रूपरसगन्धगुणादि विधायकश्रुतीनामुपासनार्थमारोपित रूपादिविषयत्वकल्पनेन सार्थक्योपपादनं सूत्रकाराभिप्रायविरुद्धमेव॥

एतेन, "अरूपवदेवहितत्प्रधानत्वात्", "प्रकाशवच्चावैयर्थ्यात्", "आहचतन्मात्रं", "दर्शयतिचाथो अपिस्मर्यत" इति सूत्रचतुष्टयस्य परकीयमर्थवर्णनं प्रत्युक्तं, सूत्रा-

क्षरानुगुणत्वादनुपपन्नत्वाच्च। तथाहि—अरूपवद्रूपादिरहित-मेव ब्रह्म, तत्प्रधानत्वात्, अस्थूलमनण्वित्यादीनां निष्प्रपंचब्र-ह्मात्मतत्वप्रधानत्वात्, सति विरोधे तत्प्रधानान्यतत्प्रधानेभ्यो बलीयांसीतिह्यरूपवदेव हि तत्प्रधानत्वादित्यस्यार्थोवर्णितः, अत्र ब्रह्मणोनीरूपत्वविवक्षायामरूपमेवहि तत्प्रधानत्वादित्येव वाच्यं नत्वरूपवदिति, मतुपोव्यर्थत्वात्, यस्सर्वज्ञस्सर्वविदि-त्यादीनां गुणश्रुतीनामतत्परत्वंचासिद्धं, सर्वज्ञत्वादीनां तस्मा-देतद्ब्रह्मनामरूपमन्नंचजायत इति समनंतरवाक्यवक्ष्यमाण-विविधविचित्रसृष्ट्युपयोगितया तत्र तात्पर्याभावस्य वक्तुमश-क्यत्वात्, यथा व्यापकोपि सूर्यप्रकाशोंगुळ्याद्युपाधिसंबंधात्त-द्दृजुवक्रादिभावं भजति, तथा ब्रह्मापि तत्तदुपाधिसंबंधा-त्तत्तदाकारतां भजतीव, तद्विषया आकारश्रुतयः, तदुपदेश-श्चोपासनार्थः, अतस्तासामवैयर्थ्यमिति प्रकाशवच्चावैयर्थ्या-दिति सूत्रस्यार्थोत्रर्णितः, अत्र प्रकाशस्यावैयर्थ्ये दृष्टान्ततया-न्वयस्सूत्रवाक्यात्स्वरसतः प्रतीयते, परैस्तु औपाधिकाकार-योगे दृष्टान्ततयायोजनात्स्वरससिद्धार्थपरित्यागः अध्याहारः वाक्यभेदकल्पनंचेति दोषास्स्पष्टाः, सर्वज्ञत्वादीनामुपासनार्थ-त्वंचासिद्धं, तत्प्रकरण उपासनाश्रवणात्, अस्तुवोपासनार्थं तदुपदेशः, तावता कथमपारमार्थ्यसिद्धिः, नह्युपासनार्थानाम-परमार्थतेत्यस्ति नियमः, तथासति आत्मेत्येवोपासीतेत्युपास्य-तयोपदिष्टस्यात्मैक्यस्या पारमार्थ्यप्रसंगात्, अपरमार्थोपाधि-कृतत्वादपरमार्थता तेषामिति तु न युक्तं, स्वाभाविकी ज्ञान-बलक्रियाचेति स्वाभाविकत्वेनोपदिष्टानां तेषामुपाधिकृतत्व-स्यैवासिद्धेः, स ईशोस्य जगतो नित्यमेव नान्योहेतुर्विद्यत

ईशनायेति परमात्मन ईशनस्य निरुपाधिकत्वश्रवणात् सर्वज्ञत्व सर्वशक्तित्वादिकं विना ईशनासंभवेनेशनं प्रत्यवश्यापेक्षितानां सर्वज्ञत्वादीनां निरुपाधिकत्वस्य तत एव सिद्धेश्च, तदेवं सूत्रस्वरससिद्धार्थं परित्यज्य सूत्रकाराप्रयुक्तवाक्यभेदापादकपदाध्याहारेण निरुपाधिकतया श्रुतिप्रमितानां सर्वज्ञत्वादीना मपरमार्थोपाधिकृतत्वेना परमार्थत्वं सूत्रकारैरभिधीयत इति वर्णनं प्रमाणशरणैर्न विश्वसनीयं, स यथा सैंधवघन इत्यादिश्रुतिश्चैतन्यमात्रं निर्विशेषं ब्रह्माहेत्याहच तन्मात्रमिति सूत्रार्थोवर्णितः, सच, एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायण इति सूत्रे स यथा सैंधवघन इति श्रुतौ विज्ञानघन एवेत्यवधारणेऽपि, अपहतपाप्मेत्यादि श्रुतावपहतपाप्मत्वादेरप्यभिधानात्सोप्यस्तीति वदता सूत्रकृतैव प्रत्युक्तः, दर्शयतिचाथो अपिस्मर्यत इति सूत्रमपि, अथात आदेशो नेतिनेतीत्यादिश्रुतिः, न सत्तन्नासदुच्यत इत्यादिस्मृतिश्च पररूपप्रतिषेधेनैव ब्रह्म दर्शयति, अतोनिर्विशेषं ब्रह्मेति व्याख्यातं। पररूपप्रतिषेधेन ब्रह्मप्रतिपादनस्य परगतरूपादिविरहाभिप्रायकतयाप्युपपन्नतया तावन्मात्रस्य निर्विशेषत्व साधकत्वासंभवात् तदप्यनुपपन्नं, अत एव चोपमासूर्यकादिवत्, यतोयमात्मा चैतन्यरूपो निर्विशेषः, अत एवोपाधिनिमित्तामपारमार्थिकीं विशेषवत्तामभिप्रेत्य जलसूर्यकादिवदित्युपमोपादीयते मोक्षशास्त्रेषु, "एक एवहि भूतात्मा भूतेभूते व्यवस्थितः, एकधा बहुधाचैव दृश्यते जलचन्द्रवत्, यथाह्ययं ज्योतिरात्मा विवस्वानपोभिन्ना बहुधैकोनुगच्छन्, उपाधिनाक्रियते भेदरूपोदेवः क्षेत्रेष्वेवमजोऽयमात्मे"त्यादिषु। अंबुवदग्रहणात्तु न तथा-

त्वमिति। मूर्तात्सूर्याज्जलं विप्रकृष्टं गृह्यते, ब्रह्म तु न मूर्तम्, नापि देहाद्युपाधिः तस्माद्विप्रकृष्टः, अतोब्रह्मणो न तथात्वं न जलप्रतिबिंबितसूर्यादितुल्यत्वमिति, सूत्रार्थः॥

अयं भावः, सूर्यादेर्मूर्तस्य स्वस्माद्विप्रकृष्टे जले युक्तः प्रतिबिंबोदयः, अमूर्तस्य सर्वव्यापिनो ब्रह्मणस्तु देहाद्युपाधौ प्रतिफलनमयुक्तं, तत्र स्थितस्य तत्र प्रतिफलनायोगात्, अतो ब्रह्मणो न जलसूर्यदृष्टान्ततुल्यत्वमिति, इमामाशंकां परिहरति, "वृद्धिह्रासभाक्त्वमंतर्भावादुभयसामंजस्यादेवमिति," उपाध्यंतर्भावात् वृद्धिह्रासभाक्त्वमिह दृष्टान्तदार्ष्टान्तिकयोस्सारूप्यं विवक्षितं, एवमुभयसामंजस्यात् दृष्टान्तदार्ष्टान्तिकसामंजस्यादविरोध इति सूत्रार्थः। अयंभावः। दृष्टान्तदार्ष्टान्तिकयोस्सर्वात्मना सारूप्यं क्वचिदपि न संभवति, अतोविवक्षितयत्किंचिदंश एव तयोस्सारूप्यं वाच्यं, प्रकृते च यथा जलप्रतिबिंबितस्सूर्यः जलगत वृद्धिह्रासादीन्भजन्निवदृश्यते, एवं ब्रह्मापि देहाद्युपाध्यंतर्गतं तद्गतवृद्धिह्रासादीन्भजदिव भवति, एवं वृद्धिह्रासादिभाक्त्वमात्रेण सारूप्यस्य विवक्षितत्वाद्ब्रह्मणोजल सूर्यतुल्यत्वमुपपद्यत एवेत्यत एवचेत्यादिसूत्रत्रयस्यार्थोवर्णितः, सोप्ययुक्तः, जलसूर्यादि दृष्टान्तेन यथा जलगतदोषैस्सूर्यो नसंस्पृश्यते, तथा ब्रह्मापि पृथिव्यादितत्त्वस्थानगतैर्दोषैर्नसंस्पृश्यत इत्येतावन्मात्रलाभेप्युपाधिनिमित्ता पारमार्थिकविशेषवत्तायास्स्वतोनिर्विशेषतायाश्चालाभात्, सूर्यस्य जलाद्यसंबंधेन तद्गतदोषासंस्पर्शेपि ब्रह्मणः पृथिव्यादितत्त्वस्थानस्थितत्वात्कथं तद्गतदोषासंस्पर्श इत्याशंकाया उदयेन तस्या अवश्यनिरसनीयतया अंबुवदग्रहणादित्यादि सूत्रद्वयस्य

तादृशशंका तत्परिहारपरत्वस्यैवोचितत्वात् । इत्थंचोपाधिगत दोषसंस्पर्शे देशसंनिकर्षस्येव लेपार्हत्वरूपस्वभावसंनिकर्षस्याप्यपेक्षिततया तद्विरहेण ब्रह्मणो न दोषसंस्पर्श इति रीत्या निरुक्तशंकापरिहारौपयिकतया वृद्धिह्रासभाक्त्वमिति सूत्रे उभयसामंजस्यादित्यत्रोभयपदस्य सूर्याकाशरूप तादृशदृष्टान्तद्वयपरताया एवोचितत्वाच्च । तदेवमुदाहृत सूत्राणां परोक्तार्थस्यानुपपन्नतया प्रागुक्तार्थपरताया एवावश्याश्रयणीयत्वेन, भेदादितिचेन्न प्रत्येकमतद्वचनात्, अपिचैवमेके, इति सूत्रयोरपि पूर्वापरानुगुण्येन पूर्वोक्त एवार्थोग्राह्यः, नतु परोक्तः, इत्थंचोभयलिंगाधिकरणे भेदश्रुतीनामुपासनार्थत्वेनापरमार्थविषयत्वस्याभेदश्रुतीनां स्वरूपोपदेशपरत्वेन परमार्थविषयत्वस्य च व्यवस्थापितत्वमसिद्धमिति सिद्धं ॥

आरंभणाधिकरणे ब्रह्मव्यतिरिक्तकृत्स्नमिथ्यात्वस्य व्यवस्थापितत्वमप्यसिद्धं । तत्र हि कार्यकारणयोरभेदे कार्योत्पादनार्थकारकव्यापारवैयर्थ्यप्रसंगात्कारणाद्भिन्नमेव कार्यमिति पूर्वपक्षे प्राप्ते तदनन्यत्वमारंभणशब्दादिभ्य इति सूत्रेण सिद्धान्त उक्तः, अत्र कार्यस्येत्यध्याहार्यं, न अन्यद् अनन्यत् तस्मादनन्यत् तदनन्यत, तस्यभावः तदनन्यत्वं, तदभिन्नत्वमित्यर्थः, आरंभणशब्दः आदिर्येषां तानि आरंभणशब्दादीनि, तेभ्य इत्यर्थः, ततश्चारंभणशब्दादिभ्यो वाक्येभ्यः कार्यस्य जगतः कारणभूतब्रह्माभिन्नत्वमवगम्यत इति सूत्रार्थः, छांदोग्ये सद्विद्याप्रकरणे । वाचारंभणं विकारोनामधेयं मृत्तिकेत्येव सत्यामिति श्रूयते । अत्र मृत्पिण्डेनेति पूर्ववाक्यादनुषेज्यत, वाचेत्यत्र वाक्पदमजहल्लक्षणया व्याहारव्यवहारोभया-

र्थकं । वाचेति हेत्वर्थे तृतीया । हेतुत्वंचाध्ययनेन वसतीत्यादाविव प्रयोजनत्वेन, आरभ्यत इत्यारंभणं, कर्मणि ल्युट्प्रत्ययान्तमिदं, आरंभणमित्यत्र सरिरस्यमध्यादित्यादाविव रलयोरभेदः, आलंभ इह स्पर्शः, ततश्चारंभणं स्पृश्यमानमित्यर्थः, विकारः=कंबुग्रीवादिमत्वाद्यवस्था । नामधेयमित्यस्यानन्तरं समुच्चेतव्यवस्तुद्वयोक्त्या समुच्चयार्थकश्चशब्दोऽर्थसिद्धः, ततश्च मृत्पिण्डेन व्याहारव्यवहारोभयार्थं घटत्वाद्याकारः घट इति संज्ञाच स्पृश्यत इति वाक्यार्थः,

अयं भावः—मृद्द्रव्यमेव स्वस्य कंबुग्रीवाद्याकारयोगं विना जलाहरणादिव्यापारौपयिकत्वस्या संभवेन तदर्थं तथाविधाकारभाग्भवति, ततश्च घट इत्यादि संज्ञांतरं भजत इति, अनेन घटमृत्पिण्डयोरभेदे घटोत्पादनार्थकारकव्यापारवैयर्थ्यमिति संज्ञाभेदान्नतयोरभेद इति च शंकाद्वयं समाहितं । तथापि तयोरभेदे किं मानमित्याशंकां शमयितुमुक्तं मृत्तिकेत्येव सत्यमिति । अत्र मृन्मयमिति पूर्ववाक्यादनुषज्यते, मृन्मयं=मृद्विकारभूतं घटशरावादि । मृत्तिकेत्येव=मृद्द्रव्यमित्येव सत्यं प्रमितमित्यर्थः, मृदयंघट इति प्रत्यभिज्ञा प्रत्यक्षेण मृद्घटयोरभेदग्रहणात् तादृशप्रत्यक्षमेव तत्त्र प्रमाणमिति भावः, तदेवं वाचारंभणं विकार इत्यादिदर्शितश्रुत्या कार्यकारणयोर्घट मृत्पिडयोरभेदोपपादनात्प्रकृते कार्यकारणयोर्जगद्ब्रह्मणोरप्यभेदसिद्धिरिति सूत्राशयः । यद्यपि मृद्विकृतिभूतस्य घटस्य मृदभिन्नत्वं संभवति । प्रकृते ब्रह्मणोऽपरिणामितया जगतस्तद्विकृतित्वासंभवेन तयोः कार्यकारणभावस्तन्निबंधनोऽभेदश्च नसंभवदुक्तिकः । तथापि यथा

शरीरगतयोर्बाल्यत्वयुवत्वयोश्शरीरद्वाराशरीरिण्यन्वयमाश्रित्य - बालो युवा जात इति व्यवहारबलाच्छरीरिणोऽपि कार्यकारणभावः, तथा प्रकृतेपि जगन्निष्ठयोरेकत्व बहुत्वावस्थयोस्तद्वारातच्छरीरके ब्रह्मण्यन्वयेन तन्निबंधनो ब्रह्मणः कार्यकारणभावोऽभेदश्चोपपद्यत एव, स्वाश्रयापृथक्सिद्धिसंबंधेनैकत्वावस्थाविशिष्टं ब्रह्मकारणं । तेन संबंधेन बहुत्वावस्थाविशिष्टं तदेव कार्यमिति । तदेतत्, सदेवसोम्येदमग्र आसीदेकमेवाद्वितीयं । तदैक्षत बहुस्यां प्रजायेयेतीति श्रुत्यावगम्यते । इदं हि वाक्यं, इदं घटशरावादि सर्वं पूर्वाह्णे एको मृत्पिण्ड एवासीदिति वाक्यतुल्यमुपलभ्यते । ततश्च जगतः कारणावस्था प्रतिपादनपूर्वकं कार्योत्पत्ति प्रकारोऽनेन वाक्येन प्रतिपाद्यत इति स्वरसतः प्रतीयते । इदं परिदृश्यमाननानाकारं जगत, अग्रे सृष्टेः प्राक् एकमद्वितीयं सदेवासीत्, तदेकमद्वितीयं सत्, बहुस्यामित्यैक्षत संकल्पमकरोदिति निरुक्तश्रुत्यर्थः, ततश्चात्रैकमिति जगतः कारणावस्था बहुस्यामिति कार्यावस्था च प्रतिपाद्यते । तत्रैकत्वं वियत्पवन देवमनुष्यादिनामरूपशून्यत्वम्, बहुत्वञ्च तथाविधनामरूपवत्वमिति, "तद्धेदं तर्ह्यव्याकृतमासीत्. तन्नामरूपाभ्यां व्याक्रियत" इति समानप्रकरणस्थवाक्यान्तरादवगम्यते. एकपदस्थाने अव्याकृतमिति, बहुपदस्थाने नामरूपाभ्यां व्याक्रियत इतिच तत्र श्रवणात्. तदिदं जगन्निष्ठमवस्थाद्वयं "तदैक्षत बहुस्याम्" इति वाक्येन बहुभवनसंकल्पसमानाधिकरणं प्रतीयते. वियत्पवनदेवमनुष्यादिरूपेण बहुभवनसंकल्पश्च तथाविधसंकल्पानुगुणसर्वज्ञत्व सर्वशक्तित्वादि विशिष्टचेतनविशे-

षस्यैव संभवति; नत्वचेतनस्य. नापि परिमितज्ञानशक्त्यादिमतो जीवस्य. स एव चेतनविशेषः परं ब्रह्म. तस्यच "निष्कळं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्" इत्यादिश्रुतिभिः निरवयवत्वनिर्विकारत्वावगमात् जगन्निष्ठयोः बहुत्वैकत्वरूपयोः कार्यकारणावस्थयोः ब्रह्मणि साक्षादन्वयासंभवेन जगदाकारेण परिणममाणयत्किञ्चिद्वस्तुद्वारैव तदन्वयोङ्गीकरणीयः. द्वारद्वारिणोस्संबन्धश्च, "यः पृथिव्यां तिष्ठन्नि" त्यादिनान्तर्यामिब्राह्मणेन शरीरात्मभावरूप उपदिष्टः. अतस्तेन संबन्धेन कार्यकारणोभयावस्थाश्रयत्वं ब्रह्मण इति, तेन संबन्धेन एकत्वरूपकारणावस्थाविशिष्टं ब्रह्म कारणम्, तेनैव संबन्धेन बहुत्वरूपकार्यावस्थाविशिष्टं तदेव कार्यमिति "सदेव सोम्येदमग्र आसीत्" इत्यादिश्रुतिवाक्यादेवावगम्यमानतया कार्यकारणयोर्जगद्ब्रह्मणोरनन्यत्वमुपपन्नतरमेव. तदेतदभिप्रेत्य सूत्रे आदिपदमुपात्तम्. तदेवमारम्भणाधिकरणे कार्यकारणयोर्जगद्ब्रह्मणोरभेद एव व्यवस्थापितः नतु ब्रह्मव्यतिरिक्तस्य मिथ्यात्वम्.

यत्तु तस्मात्परमकारणात् ब्रह्मणो नान्यत्वं परमार्थतो व्यतिरेकेणाभावः कार्यस्यारंभणशब्दादिभ्योवगम्यते, इति सूत्रार्थः. अयं भावः—छान्दोग्ये सद्विद्याप्रकरणे एकस्य विज्ञानेन सर्वस्य विज्ञानतां प्रतिज्ञाय, तत्र दृष्टान्तापेक्षायां "यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इत्युक्तम्। विकारः=घटशरावादिः। वाचारंभणम्=वाचा केवलमारभ्यते घटश्शराव उदञ्चनञ्चेति. नतु वस्तुतो विकारो नाम कश्चि-

दस्ति, नामधेयमात्रं ह्येतदनृतं, मृत्तिकेत्येव सत्यमित्युक्तश्रुत्यर्थः। घटशरावादीनां विकाराणां मिथ्यात्वात् मृत्तिकायाः एकस्या एव सत्यत्वात् घटशरावादीनां मृदेव तत्वमिति, मृदि ज्ञातायां घटशरावादि सर्वं तत्वतो ज्ञातं भवतीति, "यथा सोम्यैकेन मृत्पिण्डेनेत्यादि श्रुतेरभिप्रायः। उक्तदृष्टान्ते ब्रह्मज्ञानेन जगतो ज्ञातताया उपपादनात् दार्ष्टान्तिके 'ब्रह्मैकमेव सत्यम्, तद्व्यतिरिक्तं कृत्स्नं मिथ्या, अतो ब्रह्मैव जगतस्तत्वमिति, ब्रह्मणि ज्ञाते जगतस्तत्वं ज्ञातं भवतीति अर्थलाभाद्ब्रह्म व्यतिरेकेण परमार्थतो जगतोऽभावोऽवगम्यत इतीति व्याख्यानं। तदश्रद्धेयं, उक्तश्रुतिसूत्राभ्या मुक्तार्थस्यालाभात्। तथाहि—वाचारंभणमित्यादिश्रुतौ वाचारंभणमित्यनेन वाचा आरभ्यत इत्येतावतोऽर्थस्य लाभेऽपि न मिथ्यात्वलाभः, तत्पदस्य तस्मिन्नर्थे व्युत्पत्तिविरहात्, वाचेत्यनन्तरं केवलमिति आरंभणमित्येतदनन्तरं नतु वस्तुतो विकारोनाम कश्चिदस्तीति चाध्याहारेण मिथ्यात्वलाभोपपादने तु स्वाच्छन्द्येनाध्याहारदोषस्स्पष्टः। नहि तत्पदाध्याहारेण विना वाक्यस्यापूर्णता, येनाध्याहारस्यावश्यकता स्यात्; विनैवाध्याहारं वाक्यार्थस्यप्राक् सुष्ठूपपादितत्वात्; एवं वाचारंभणमित्यस्य मिथ्यात्वार्थकत्वे नामधेयमित्यस्य पुनरुक्ततादोषप्रसंगः, तस्यापि तदर्थकत्वस्यैवांगीकृतत्वात्, एवं विकारमिथ्यात्वस्य मृत्तिकामात्र सत्यत्वस्य च विवक्षितत्वे मृत्तिकैव सत्यमित्येव वक्तव्यतया मृत्तिकेत्येव सत्यमित्यत्र इति पदवैयर्थ्यंच अतोनात्र मिथ्यात्वविवक्षा सुवचा॥

अपिच यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं

विज्ञातं स्यादित्येकविज्ञानेन सर्वस्य ज्ञाततायां निदर्शनतयोक्ताया एकमृत्पिण्डज्ञानेन सर्वमृन्मयविज्ञाततायाः उपपादनाय वाचारंभणमित्यादि वाक्यारंभ इतीदं तावत् सर्वसंमतं, ततश्च तदुपपादकार्थ प्रतिपादकत्वमस्य वाक्यस्य सर्वैरभ्युपगन्तव्यं। तदुपपादकार्थश्च किं घटशरावादीनां मिथ्यात्वं, किंवा तेषां मृत्पिण्डस्य चैकद्रव्यत्वमितीदं तावद्विवेचनीयं। तत्र घटशरावादीनां मृत्पिण्डस्य चैकद्रव्यत्वमेव तदुपपादकमिति प्रकृत्यधिकरणे नावगम्यते ॥

तथाहि—भगवता सूत्रकृता प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधादिति सूत्रे येनाश्रुतं श्रुतं भवतीत्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञा यथासोम्यैकेन मृत्पिण्डेनेत्यादिस्तत्र दृष्टान्त इत्येताभ्यां श्रुत्युक्ताभ्यां ब्रह्मणो जगदुपादानत्व मवगम्यत इत्यभिधाय पुनरपि तदेवोपादानत्वं सोऽकामयत बहुस्यां प्रजायेयेतीत्युपक्रम्य "सच्चत्यच्चाभवदि"त्यादिना ब्रह्मण एव जगद्रूपेण परिणामश्रवणादपि सिध्यतीति परिणामादिति तदधिकरणसूत्रांतरेणाभिहितं, अत्र प्रतिज्ञा दृष्टान्ताभ्यामवगम्यमानस्योपादानत्वस्य परिणामश्रवणादप्यवगम्यमानत्वोक्त्या परिणाम्युपादानत्वमेव दृष्टान्तावगतमुपादानत्वमिति स्फुटं प्रतीयते। ततश्च घटादीन् प्रति मृत्पिण्डस्य परिणाम्युपादानत्व मेवेति सिद्धेर्मृत्पिण्डज्ञानेन घटादीनां ज्ञाततायानतन्मिथ्यात्वमुपपादकं, अपि तु मृत्पिण्डस्य घटादेश्चैकद्रव्यत्वमेवेति तदेव वाचारंभणमित्यादिश्रुत्यर्थो न विकारमिथ्यात्वं, किंच, मृत्पिण्डज्ञानेन घटादीनां ज्ञाततायानतन्मिथ्यात्वस्योपपादकतासंभवः। शुक्तिज्ञानेन तदध्यस्तरजतज्ञाततायाः अदर्शनात्।

शुक्तिरजताध्यासस्थले शुक्त्यतिरिक्तस्य रजतस्याभावेन शुक्तिरेव रजतस्य तत्वमिति शुक्तौ ज्ञातायां रजततत्वं ज्ञातं भवतीति श्रुत्यर्थ इति चेन्नैतद्युक्तं; परमार्थशुक्तेरपरमार्थरजततत्वरूपत्वायोगात् । श्रुतौ तत्वपदाध्याहारप्रसंगाच्च; विकारमिथ्यात्वस्य वाचारंभण श्रुत्यर्थत्वे मृत्तिकेत्येव सत्यमिति वाक्यार्थस्यासंगतिश्च, ब्रह्मकार्यस्य मिथ्यात्वे घटादेरिव मृत्तिकाया अपि ब्रह्मकार्यत्वाविशेषेण मिथ्यात्वस्यावश्यकतया सत्यत्वायोगात् । व्यावहारिक सत्यताविवक्षणे तस्या घटादिसाधारण्येन मृत्तिकैव सत्यमित्यवधारणासंगतेः, एवं दार्ष्टान्तिके ब्रह्मकार्यस्य जगतोमिथ्यात्वस्य विवक्षितत्वे तदैक्षत बहुस्यां प्रजायेयेतीति स्वात्मनो बहुभवनसंकल्पपूर्वकं तत्तेजोसृजतेत्यादिना ब्रह्मणस्तेजः प्रभृति सृष्टयुक्त्यसंगतिः वस्तुतस्तेजः प्रभृतिसृष्टेरभावात्; दृष्टिरेव सृष्टिरिति चेत् तर्ह्यार्जवेन तत्तेजोऽपश्यदित्यादिवाच्यं । तत्वोपदेशाय प्रवृत्तया श्रुत्या तथानभिधाय तत्तेजोऽसृजतेत्याद्यभिधानात् परमार्थसृष्टिरेव विवक्षितेति निश्चीयते । एवं दृष्टान्त दार्ष्टान्तिकवाक्य पर्यालोचनया ब्रह्मव्यतिरिक्तस्य परमार्थतोऽभावः श्रुतिवाक्यान्नलभ्यत इति सिद्धं । एवं सूत्राक्षरैरपि नोक्तार्थलाभः, तदनन्यत्वमित्यत्र तस्मादनन्यत तदनन्यत् तस्य भावस्तदनन्यत्वमिति हि विग्रहः, तत्रानन्यशब्दस्याभिन्न इत्यर्थे व्युत्पन्नतया वृक्षादनन्या शिंशुपेत्यादौ यथा शिंशुपायां वृक्षाभिन्नत्वस्य बोधः; तथा कारणवाचितच्छब्द घटितात्तस्मादनन्यत्कार्यमिति वाक्यात्कार्ये कारणाभिन्नत्वस्य बोधस्संभवति नतु कारणव्यतिरेकेण परमार्थतः कार्यस्याभाव

इत्यर्थस्य । अथ रज्जोरनन्यस्सर्प इत्यादौ सर्पमिथ्यात्वबोधवत्प्रकृतेपि कार्यमिथ्यात्वबोधस्संभवदुक्तिक एवेति चेन्न। तत्रानन्यपदस्यारोपिते लाक्षणिकतया सर्पमिथ्यात्वबोधः, प्रकृते त्वनन्यपदस्य मुख्यार्थपरिग्रहे बाधकादर्शनेन लक्षणाया अन्याय्यतया नमिथ्यात्वलाभसंभवः ॥

किं च ब्रह्मविवर्तवादस्य सूत्रकाराभिप्रायविरुद्धत्वादप्युक्तरीत्या सूत्रार्थवर्णनमयुक्तं, तथाहि प्रकृत्यधिकरणे परिणामादिति सूत्रेण ब्रह्मणो जगदाकारेण परिणामोऽभिहितः, नविवर्तः । अतो विवर्तवादो न सूत्राकाराभिमत इति स्फुटं प्रतीयते, एवं प्रयोजनवत्वाधिकरणे ब्रह्मणो जगत्सृष्टौ कस्यापि प्रयोजनस्यासंभवात्प्रयोजनं विना सृष्ट्यसंभवाच्च ब्रह्मणो जगत्स्रष्टृत्वं नोपपद्यत इति न प्रयोजनवत्वादिति सूत्रेणाक्षिप्य लोकवत्तुलीलाकैवल्यमिति सूत्रेण केवललीलैव ब्रह्मणो जगत्सृष्टौ प्रयोजनमिति परिहारवर्णनादपि विवर्तवादस्सूत्रकृदनभिमत इति निश्चीयते । जगतो ब्रह्मण्यध्यस्ततायास्सूत्रकृदभिमतत्वे अध्यासस्य निष्प्रयोजनत्वं नदोषः, द्विचन्द्रालातचक्रगन्धर्वनगराद्यध्यासस्थले विनैव प्रयोजनमध्यासदर्शनादिति हि परिहर्तव्यं, नतु तथा परिहृतं, अपितु लीलैव सृष्टेः प्रयोजनमिति परिहृतं, जगत्सृष्टेस्तदध्यासरूपत्वे चोक्तपरिहारोनघटते, भ्रान्तेर्लीला प्रयोजनमित्युक्तेरयुक्तत्वात् । एवं तत्रैव "वैषम्यनैर्घृण्येन सापेक्षत्वा" दिति सूत्रेण ब्रह्मणो जगत्स्रष्टृत्वे सृष्टौ वैषम्यदर्शनेन विषमसृष्टिकरणेन तस्य पक्षपातोनिर्दयत्वं चेति दोषद्वयं प्रसज्यत इत्याशंक्य विषमसृष्टेस्सृज्यमानतत्तज्जंतु पुण्यपापरूपकर्मानिबंधनत्वान्नोक्तदोषद्वयप्रसंग इति परि-

हारकथनादपि विवर्तवादस्य तदनभिमतत्वं निर्णीयते, सृष्टेरध्यासरूपत्वे स्वप्ने कांश्चित्सुखिनः कांश्चिद्दुःखिन उच्चावचान्प्राणिनः पश्यतस्स्वप्नदृश इव तथातथा भ्राम्यतो ब्रह्मणोपि वैषम्यनैर्घृण्यप्रसंगविरहेण तद्दोषशंका परिहारयोरयोगात्, यत्तु सूत्रकृतां प्रयोजनवत्त्वाधिकरणे वैषम्यनैर्घृण्यशंका तत्परिहारादि सृष्टेस्तात्विकत्वमभ्युपेत्य, परमार्थतस्तु सृष्टेर्मायिकत्वमेवाभिमतमिति, तन्न, सृष्टेरपरमार्थत्वमेव सूत्रकाराभिमतमित्यत्रानन्यथासिद्धज्ञापक सूत्रानुपलंभेन वैषम्यादिशंकातत्परिहारयोरभ्युपगम्यवादत्वोक्तेरश्रद्धेयत्वात्, तदेवं विवर्तवादस्य सूत्रकाराभिप्रायविरुद्धत्वात्तदनन्यत्वमित्यादिसूत्रस्य प्रपंचमिथ्यात्वपरत्ववर्णनमयुक्तमिति सिद्धं । किंच "नाभाव उपलब्धेः" । "वैधर्म्याच्चनस्वप्नादिव" दिति सूत्राभ्यां बाह्यार्थानामसत्वं निराकृत्य तत्सत्यतायास्सूत्रकारैरेव व्यवस्थापिततया तद्विरोधादप्युक्तसूत्रस्य प्रपंचमिथ्यात्वपरत्ववर्णनमप्रामाणिकमेव ॥

तथाहि, विज्ञानमेवतत्वं । तद्व्यतिरिक्तोबाह्योऽर्थः कश्चिदपि नास्ति, बाह्यार्थाभावे नीलपीतादिज्ञानानां निर्विषयत्वं स्यादितितु नशंक्यं ज्ञानानामेव नीलपीताद्याकारत्वात्, नहि नीलज्ञानं पीतज्ञानं स्तंभज्ञानं कुंभज्ञानमित्यादिरूपं ज्ञानस्य विषयविशेषासाधारण्यं ज्ञानगतं विशेषमंतरेणोपपद्यते ततश्च ज्ञानस्य विषयसारूप्येऽवश्यमभ्युपगन्तव्ये अवश्याभ्युपगन्तव्यज्ञानाकारेणैव सर्वव्यवहारोपपत्तौ बाह्यार्थकल्पना व्यर्था, अपि च यथा स्वप्नादिप्रत्ययाविनैव बाह्यार्थं भवंति, तथैव जागरितप्रत्यया अपि विनैव बाह्यार्थं भावितुमर्हंति । अतो

बाह्यार्था न संत्येवेति योगाचारपूर्वपक्षे सिद्धान्त उक्तः, "नाभाव उपलब्धे" रिति, बाह्यार्थानामभावोन वक्तुं शक्यः तेषामुपलभ्यमानत्वादिति सूत्रार्थः, अयं भावः, उपलभ्यमानत्वादेवहि ज्ञानस्य सद्भावोभ्युपगम्यते, ततश्च ज्ञानस्येव घटादेरप्युपलभ्यमानताया अविशिष्टतया तस्यापि सद्भावोऽवश्याभ्युपगन्तव्यः, अन्यथा ज्ञानस्याप्यपलापप्रसंगात्, नह्युपलब्धिव्यतिरेकेण ज्ञानस्य सद्भावे प्रमाणमस्ति, उपलब्धिश्च घटमहंजानामीत्यादिरूपा, तत्र घटादिकर्मकतया अहमर्थकर्तृकतयाच ज्ञाने उपलभ्यमाने तयैवोपलब्ध्या ज्ञानस्य परं सद्भाववर्णनमुपलब्धिविरुद्धं, ज्ञानस्य तत्तदर्थासाधारण्यंतु तत्तदर्थसंबंधनिबंधनं न तत्सारूप्यनिबंधनामिति ॥

यदुक्तं—स्वाप्नप्रत्ययवज्जागारितप्रत्ययोपि विषयशून्य एव भवितुमर्हतीति तत्रोत्तरमुक्तं । वैधर्म्याच्चनस्वप्नादिवदिति, जाग्रत्प्रत्ययः, स्वाप्नप्रत्ययवद्विषयशून्योन भवितुमर्हति, जाग्रत्प्रत्ययस्य स्वाप्नप्रत्ययवैधर्म्यात्तद्विसदृशत्वादिति सूत्रार्थः, अयं भावः, स्वप्नदृशा यस्मिन्देशे यस्मिन्काले योऽर्थस्स्वप्ने दृश्यते प्रबुद्धेन तेन तस्मिन्देशे तस्मिन् काले तदभावोगृह्यते । अतो बाधितार्थकत्वात्स्वप्नस्य विषयशून्यत्वं, जाग्रत्प्रत्ययेतु नैवं बाधोदृश्यते । अतस्स्वप्नविसदृशत्वाज्जाग्रत्प्रत्ययस्य विषयशून्यता न वक्तुं युक्तेति । अस्य सूत्रस्येत्थमेवाभिप्रायः परैरपिवर्णितः । तथाचतदीयंभाष्यं । यदुक्तं स्वप्नादिप्रत्ययवज्जागरितप्रत्यया अपि विनैव बाह्यार्थेनभवेयुः प्रत्ययत्वाविशेषादिति तत्राह "वैधर्म्याच्चन स्वप्नादिवत", न स्वप्नादिवज्जागरितप्रत्यया भवितुमर्हंति, कस्मात्?, वैधर्म्यात्, किं

पुनर्वैधर्म्यं, बाधः, बाध्यते हि स्वप्नोपलब्धं वस्तु प्रबुद्धस्य, मिथ्यैव मयोपलब्धो महाजनसमागमः, नह्यस्ति महाजनसमागमः, निद्रादूनंतुमेमनोबभूव, तेनैषा भ्रान्तिरुद्बभूवेति, एवं मायादिष्वपि भवति यथायथं बाधः, नैवं जागरितोपलब्धं स्तंभादि कस्यांचिदप्यवस्थायां बाध्यते, तत्वैवं सति न शक्यते वक्तुं मिथ्याजागरितोपलब्धिः उपलब्धित्वात् स्वप्नोपलब्धिवदिति तयोरंतरं स्वयमनुभवता । नचस्वानुभवापलापः प्राज्ञमानिभिर्युक्तः कर्तुं, तस्माद्विज्ञानव्यतिरिक्तो बाह्यार्थोऽबाधितोवगन्तव्य इति । इत्थं चास्मिन् सूत्रे जाग्रद्दशोपलब्धानां बाह्यार्थानामबाधितत्वरूपं स्वाप्नपदार्थाद्वैलक्षण्यं सूत्रयता भगवता सूत्रकृता बाह्यार्थानां मिथ्यात्वव्यापकस्य बाध्यत्वस्य निराकरणेन मिथ्यात्वं निराकृतं, पूर्वसूत्रे चासत्वं निराकृत्य सत्यत्वमेव व्यवस्थापितं, अतस्सूत्रकाराणां प्रपंचमिथ्यात्वाभिप्रायकल्पनमुक्त सूत्रद्वयविरुद्धमेव, तदेवमुभयलिंगाधिकरणे ब्रह्मणो निर्विशेषत्वस्य, आरंभणाधिकरणे ब्रह्मव्यातिरिक्तकृत्स्नमिथ्यात्वस्यच व्यवस्थापितत्वस्यासिद्धतया भेदश्रुतीनामुपासनार्थताया अभेदश्रुतीनां स्वरूपोपदेशपरतायाश्च कुत्रापि सिद्धान्तिततत्वा सिद्धेरपरमार्थविषयाभेदश्रुतयः, अभेदश्रुतयस्तु परमार्थविषया इतीदृशवैषम्यस्य सूत्रकाराभिप्रेतत्वकल्पनासंभवेन भेदाभेदयोरुभयोरपि श्रुतिसिद्धत्वेऽविशिष्टेपि जीवब्रह्मणोरभेद एव प्रतिपत्तव्य इत्यत्र नियामकाभावेनात्मेतितूपगच्छंति ग्राहयंति चेति सूत्रेण तथाविधसिद्धांतकरणे सिद्धांतस्या संगतिप्रसंगोदुर्वार एव, अतस्तत्सूत्रस्य पूर्वोक्त एव सूत्रकाराभिमतोऽर्थ इति न तत्रापि जीवब्रह्मणो-

स्वरूपैक्यस्य सिद्धान्तितत्वसिद्धिः, ततश्चास्मिन् शास्त्रे जीवेश्वरयोस्स्वरूपैक्यपरस्य कस्याप्यनन्यतासिद्धस्य सूत्रस्यानुपलंभेनाधिकंतुभेदनिर्देशादिति सूत्रे तयोः कल्पितभेदः प्रतिपाद्यत इत्यत्र गमकक्लेशाभावात्प्रत्युत तयोस्स्वाभाविकभेद एव प्रतिपाद्यत इत्यत्र पूर्वोपदर्शितानन्यथासिद्ध बहुतरहेतूपलंभाच्च तयोस्स्वाभाविकभेद एव तत्र सूत्रकारैस्सूत्रित इत्यकामेनापि स्वीकर्तव्यं, ततश्च तत्रतत्वमसीत्यादिश्रुतेर्जीवेश्वरयोस्स्वरूपैक्यपरतां निराकृतवता सूत्रकारेणाविभागेन दृष्टत्वादिति सूत्रे तच्छ्रुतेः तयोस्स्वरूपैक्य परत्वाभिधानायोगेन तत्सूत्रस्य परोक्तार्थोऽनुपादेय एव ॥

इदमत्रावधेयं, तदेकपारार्थ्य तदेकपारतंत्र्य पर्यवसितब्रह्मापृथक्सिद्धविशेषणतया स्वात्मानुभवोऽत्र सूत्रकारैः प्रतिपाद्यते, स्वात्मयाथात्म्य साक्षात्कारनिबंधन स्वात्मानुभवविशेषस्य सूत्रणात् । स्वात्मयाथात्म्यस्य च वासुदेवाख्य परब्रह्मैकपारार्थ्य पारतंत्र्यरूपत्वात्, प्रत्यगात्मस्वरूपं हि परब्रह्मैक शेषभूतं तदेकपरतंत्रंच; "पतिं विश्वस्यात्मेश्वरं", "य आत्मानमंतरोयमयती" त्यादिश्रुतेः । विश्वस्य पतिं=शेषिणं । इति हि तदर्थः, पतिशब्दस्य शेषिणि रूढत्वात् । इत्थं चेदृशस्वात्मयाथात्म्य साक्षात्कारमूलकोयमविभागेनानुभवस्तदेकपारार्थ्येन तदेकपारतंत्र्येण च स्वात्मानुभवरूप एव पर्यवस्यति । मुक्तिदशायामीदृशस्वात्मानुभवप्रदर्शनं च मुक्तानां सर्वेपि व्यापारानिरूपाधिकस्वामिभूत परमात्मप्रीत्येक प्रयोजनोद्देशेन प्रवर्त्यमानतया तत्परिचर्यारूपा इति ज्ञापनाय । नहि कश्चित्स्वात्मनः परशेषतैकस्वरूपतां साक्षात्कुर्वन् स्वार्थो-

द्देशेन क्वचित्प्रवर्तेत । अतस्स्वात्मनां परमात्मशेषतैकस्वरूपतां साक्षात्कृतवतां मुक्तानां सर्वोपि व्यापारः परमात्मप्रीत्युद्देशेनैवेति हि सुशकं विज्ञातुं । अनेन च मुक्तव्यापारस्सर्वोपि भगवत्परिचर्यारूप इति ज्ञापनेन । "स एकधाभवति त्रिधाभवति । स यदिपितृलोककामोभवति संकल्पादेवास्य पितरस्समुत्तिष्ठन्ति । स तत्र पर्येति जक्षत्क्रीडन्रममाणस्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा । तेषां सर्वेषु लोकेषु कामचारोभवतीत्यादि" ष्वाम्नातानामुत्तरसूत्रेषु निरूपयिष्यमाणानां शरीरपरिग्रह पितृलोकादि कामनाजक्षण सर्वलोक कामचारादि मुक्तव्यापाराणां सांसारिकव्यापारसजातीयानां सांसारिकफलत्वशंका निराकृता । पुण्यापुण्यरूप कर्मफलभोगार्थीनामेव तादृशव्यापाराणां सांसारिकफलत्वात् । मुक्तव्यापाराणां च परञ्ज्योतिरुपसंपत्या कर्मबन्धनिवृत्तिरूप स्वरूपाविर्भावानन्तरं साक्षात्कृत निरुपाधिकशेषिभूत परमात्माभिप्रायानुरोधेन तत्प्रीत्येकोद्देशेन स्वेच्छामात्रकृतत्वेन सांसारिकफलत्वायोगात् ॥

"ननुश्रुतिस्मृति सूत्रेषु मुक्तस्य स्वातंत्र्यप्राप्त्यभिधानेन तद्विरोधप्रसंगात्पारतंत्र्यशेषवृत्योर्दुःखहेतुत्वेन तन्मिश्रत्वे मुक्तेरपुरुषार्थत्वप्रसंगाच्चोक्तरीत्या सूत्राभिप्रायवर्णनमयुक्तम् । श्रुतिर्हि भूमविद्याप्रकरणे ब्रह्मोपासकमधिकृत्याह, "सस्वराड्भवतीति" । स्वं राट् यस्य स स्वराट् इति व्युत्पत्या स्वतन्त्र इति हि तदर्थः । अयं चार्थः अथयेऽन्यथाऽतो विदुस्तेऽन्वराजानोभवन्तीत्यनन्तरवाक्ये प्रकारान्तरेणोपासकस्य परतंत्रत्वप्राप्त्यभिधानादवगम्यते । स्मृतौच महाभारते मोक्षधर्मे

वसिष्ठकरालसंवादे । मुक्तं प्रकृत्य; "परेण परधर्मी च भवत्येष समेत्यवै" इत्युपक्रम्योक्तं । स्वतंत्रश्च स्वतंत्रेण स्वतंत्रत्वमुपाश्नुत इति । स्वतंत्रेण परेण ब्रह्मणा समेत्य स्वतंत्रस्सन् स्वतंत्रत्व मुपाश्नुते, स्वातंत्र्यफलमनुभवतीत्यर्थः। सूत्रकारोप्याह । अत एव चानन्याधिपतिरिति । अत एव सत्यसंकल्पत्वादेव मुक्तः अनन्याधिपतिः अधिपत्यन्तर रहित इत्यर्थः । अयं भावः । मुक्तस्य नियंत्रंतरसत्वे प्रवृत्तस्य निवर्तनेन निवृत्तस्य प्रवर्तनेनच मोघसंकल्पत्व प्रसंगान्नास्तिमुक्तस्याधिपतिरिति । यातु पतिं विश्वस्येति श्रुतिः सापि बद्धदशाभिप्राया । अत एव स्मर्यते । "पारतंत्र्यं परे पुंसि प्राप्य निर्गतबन्धनः । स्वातंत्र्यमतुलं प्राप्य तेनैव सहमोदते," इति । अत्र हि यावद्बन्धं पारतन्त्र्यं। बन्धनिवृत्तौ तु स्वतंत्रोभवतीति स्पष्टमुक्तम् । य आत्मनि तिष्ठन्निति श्रुतिरपि बद्धात्मपरैव यमात्मान वेदेति तत्र श्रवणात् । मुक्तस्य सर्वज्ञत्वश्रवणेन तस्यावेदितृत्वोक्त्यसंगतेः । पारतंत्र्यशेषवृत्त्योर्दुःखहेतुत्वं तु लोकसिद्धमेव । अत उक्तरीत्या सूत्राशयवर्णनमयुक्तमिति चेत् । अत्रोच्यते । पतिं विश्वस्यात्मेश्वरमित्यनेनैव बद्धानामिव मुक्तानामपि परमात्मशेषत्वं तावत्सिद्धम् । पतिं विश्वस्येत्यनेन परमात्मनोऽचित्सं सृष्ट चेतनशेषित्वस्य आत्मेश्वरमित्यनेनात्मनामीश्वर इति षष्ठीसमास निष्पन्नेनाधिद्वियुक्त निष्कृष्टात्म स्वरूपशेषित्वस्य च तत्रोक्तेः। तथाहि। पतिं विश्वस्यात्मेश्वर मित्युपक्रम्य, श्रुतिराह । "स ब्रह्मा स शिवस्सेन्द्रस्सोक्षरः परमस्वराडिति"। अत्र ब्रह्मरुद्रेन्द्रा मुक्तात्मा च परमात्मसामानाधिकरण्येन

निर्दिष्टाः । अक्षरः परमः स्वराडित्यत्राक्षरशब्देन मुक्तात्मनोऽभिधानात् । अक्षरशब्दोहि मुक्तात्माभिधायी "कूटस्थोऽक्षर उच्यत" इति भगवद्वचनात् । ईदृशसामानाधिकरण्य निर्देशे च ब्रह्मादीनां परमात्मनश्च शरीरात्मभावरूपं तादात्म्यमेव निबंधनतया श्रुत्यभिप्रेतं । अत एव श्रुत्यभिप्रायविदा भगवता सूत्रकृता शरीरात्मभावादेव जीवपरयोस्सामानाधिकरण्य निर्देश इति सूत्रितम् । "अवस्थितेरिति काशकृत्स्न" इति । अवस्थितेः जीवात्मन्यंतरात्मतया परमात्मनोऽवस्थानाज्जीवात्म परमात्मवाचिशब्दयोस्सामानाधिकरण्यमिति सूत्रार्थः ॥

अयं भावः । य आत्मनितिष्ठन्नित्यादिश्रुतिषु परमात्मनो जीवात्मन्यन्तरात्मतयाऽवस्थान श्रवणेन जीवात्मनः परमात्मशरीरत्वाच्छरीरवाचि शब्दानां शरीरिपर्यन्तवाचकतायाः "चराचरव्यपाश्रयस्तुस्यात्तद्व्यपदेशो भाक्तस्तद्भाव भावित्वादिति" सूत्रेण समर्थयिष्यमाणतया जीववाचिशब्दानां तच्छरीरक परमात्मपर्यन्तवाचकत्वाज्जीवात्म परमात्म वाचिशब्दयोरेकार्थवृत्तित्वरूप सामानाधिकरण्योपपत्तिरिति । यद्यपीदं काशकृत्स्नमतमित्युक्तं सूत्रे । तथापि तदेव सूत्रकारस्यापि मतम् । उक्तसामानाधिकरण्योपपादनाय प्रवृत्तेषु "प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः । उत्क्रमिष्यत एवं भावादित्यौडुलोमिः । अवस्थितेरिति काशकृत्स्नः" इति सूत्रितेषु पक्षेषु पूर्वपूर्वोपमर्देन विनोत्तरोत्तरानुत्थानाच्चतुर्थपक्षानुपन्यासाच्च चरमः काशकृत्स्नपक्ष एव सूत्रकाराभिमत इति निश्चीयमानत्वात् । तदिदं शरीरात्म भावनिबंधनम् सामानाधिकरण्यं परमात्मनो ब्रह्मादीन्प्रत्यात्मत्वमंतरा नघटत इति तस्य तान्प्रत्यात्मत्वविधा-

नाय प्रवृत्तः तद्विश्वमुपजीवति पतिं विश्वस्यात्मेश्वरमित्यादि पूर्ववाक्यसंदर्भ इति विज्ञायते। आत्मत्वंहि नियमेन धारकत्वे नियंतृत्वेच सति शेषित्वं, तत्र तद्विश्वमुपजीवतीत्यनेन कृत्स्नधारकत्वमुच्यते। यच्चकिंचिज्जगत्यस्मिन्नित्यादिनाच नियंतृत्वम्। तत्रोच्यमानव्याप्तेर्नियमनार्थत्वात्। पतिंविश्वस्येत्यनेन ब्रह्माद्यचित्संसृष्टचेतनशेषित्वम् आत्मेश्वरमित्यनेन मुक्तात्मशेषित्वं च विधीयते। पतिशब्दस्येवेश्वरशब्दस्यापि शेषिवाचकतायाः "स्वामीत्वीश्वरः पतिरीशिते"-त्यनुशासनसिद्धत्वात्। यद्यपि आत्मेश्वरमित्यनेनानीश्वरत्वविधिरपि प्रतीयते तथापि तत्परत्वाङ्गीकारे अपेक्षिताविधानानपेक्षितविधानयोः प्रसंगः। सोक्षरः परमस्वराडिति वक्ष्यमाण सामानाधिकरण्योपपादकतया मुक्तात्मशेषित्वविधानं ह्यपेक्षितम्। अनीश्वरत्वं तु अनेन सर्वगतत्वमायाशब्दादिभ्य इति सूत्रोक्तन्यायेन "यच्चकिंचिज्जगत्यस्मिन् दृश्यते श्रूयते पिवा। अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणस्थित" इति प्राकरणिक वाक्यान्तरेण सिद्धत्वादनपेक्षितविधानम्। आयामशब्दादिभ्यः व्याप्तिवाचि शब्दादिभ्योवगम्यमानं अनेन ब्रह्मणा सर्वगतत्वं सर्वस्य व्याप्तत्वमस्माद्ब्रह्मणः उत्कृष्टं तत्वं नास्तीत्यवगमयतीति सूत्रार्थः। अयं भावः। यच्च किंचिज्जगत्यस्मिन्नित्यादिना सर्वस्मिन्नपि जगति नियंतृतया व्याप्तिः परमात्मनः श्रूयते। अनेन च सर्वस्मिन्नपि नियंतृतया व्याप्तिवचनेन प्रकृतात्परमात्मन उत्कृष्टं तत्वं नास्तीति लभ्यते। ततोप्युत्कृष्ट तत्वान्तरसत्वे तन्नियंतृत्वाभावेन सर्वस्मिन्नियंतृतया व्याप्त्ययोगादिति। इत्थं चाने-

नैव परमात्मन ईश्वरान्तर राहित्यरूपानीश्वरत्व सिद्धेरात्मेश्वर मित्यत्र न तद्विधानापेक्षा । अस्तु वा आत्मेश्वरमित्यस्य प्रकृतस्येश्वरस्येश्वरान्तर निषेधकत्वमेव । तथापि सोक्षरः परमस्वराडिति सामानाधिकरण्योपपादनाय परमात्मनो मुक्तात्मानं प्रत्यप्यात्मत्वस्य विधेयतया तत्सिद्ध्यै तं प्रति शेषित्वमपि प्राकरणिकवाक्येन विधेयम् । अतः, पतिं विश्वस्येति वाक्यमेवासंकोचेन मुक्तं प्रत्यपि शेषित्वविधायकमित्यभ्युपगंतव्यम् । न चैवं सस्वराड्भवतीति श्रुतिविरोध इति शंक्यम् । सोक्षरः परमस्वराडित्यत्रस्वराडित्यनेन सस्वराड्भवतीति श्रुत्युक्तमेव प्रत्यभिज्ञाप्य, तं प्रत्यपि परमात्मन आत्मत्वोक्त्या तस्य स्वतंत्रत्वासिद्धेस्सस्वराड्भवतीत्यत्र स्वराडित्यस्यान्यथानेयत्वात् । ततश्च स्वराडित्यनेन संसारदशायामनुवृत्तं कर्मवश्यत्वं मुक्तिदशायां निषिध्यत इत्येवांगीकरणीयम् । उदाहृत महाभारतादि वचनस्थ स्वतंत्रशब्दस्याप्ययमेवार्थ इति न कश्चिद्विरोधः । अत एव चानन्याधिपतिरिति सूत्रेऽनधिपतिरित्यनभिधायानन्याधिपतिरित्यभिहितवतः सूत्रकारस्यापि परमात्मनोऽन्योऽधिपतिर्मुक्तस्य नास्तीत्यस्मिन्नर्थ एव तात्पर्यं गम्यते । यत्तूक्तमीश्वरपारतंत्र्याभ्युपगमे मुक्तस्य सत्यसंकल्पत्व भंगप्रसंग इति । तन्न । ईश्वरपारतंत्र्येपि मुक्तस्येश्वरेण तदिच्छाप्रतिघातस्य कदाप्यकरणेन तस्य सत्यसंकल्पत्वोपपत्तेः । मुक्तस्य पारतंत्र्य सत्यसंकल्पत्वयोर्द्वयोरपि प्रमाणप्रतिपन्नत्वेनोक्तरीत्यैव सत्यसंकल्पत्वस्य निर्वाह्यत्वात् । यदप्युक्तं पारतंत्र्यशेषवृत्त्योर्लोके दुःखहेतुत्वदर्शनात्तन्मिश्रत्वे मुक्तेरपुरुषार्थत्वप्रसंग इति । तदपि न । कर्माधीनयोः पारतंत्र्यशेष-

वृत्त्योरेव दुःखहेतुत्वेन स्वरूपानुबंधिनोस्तयोर्दुःखहेतुत्वायोगात्। आत्माभिमानानुगुण्येन हि पुरुषार्थो व्यवतिष्ठते। तद्यथा देहात्माभिमानिनः पशुमनुष्यादयोन्यदन्यद्भोग्यं मन्यंते। भगवच्छेषत्वमेव स्वस्य स्वाभाविकरूपमिति साक्षात्कृतवतस्तु निरुपाधिकस्वशेषिभूत भगवच्छेष वृत्तिरेव भोग्यतमा भवितुमर्हति। न तु स्वातंत्र्यम्। स्वरूपविरुद्धत्वात्। यदा परमात्मशेषत्वमेवास्यस्वरूपम्। शेषिविषये किंचित्कारमन्तरा न शेषत्वसिद्धिश्च। तदा तस्मिन् शेषवृत्तिं विना कथं स्वरूपलाभः। स्वरूपलोपकारिणि वा कथमिव रुचिरुदियात्। अतो भगवति पारतंत्र्यशेषवृत्त्योः नदुःखहेतुत्वं, प्रत्युत निरतिशयभोग्यतया याऽऽनन्दहेतुत्वमेव। अपि च अलंतावत् शेषवृत्तेर्निरतिशयप्रियत्वे तत्प्रतिसंबंधिनः स्वाभाविकशेषित्वमेकमेव। किं पुनस्तस्य स्वरूपरूप गुणविभूतिभिर्निरतिशयभोग्यता प्रकर्षमिश्रणे। उपदर्शित सर्वप्रकार निरतिशयभोग्यं हि ब्रह्म आम्नायते। "तदेतत्प्रेयः पुत्रात्प्रेयोवित्तात्प्रेयोन्यस्मात्सर्वस्मात्। एषास्य परमागतिरेषास्य परमासंपत् एषोस्य परमोलोकः एषोस्य परम आनंदः एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवंति। रसो वैसः। रसं ह्येवायं लब्ध्वा नन्दीभवति। कं ब्रह्मखं ब्रह्मयत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानातिसभूमा। तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी। यत्ते कल्याणतमं रूपं। भारूपस्सत्यकामस्सत्यसंकल्पः। मातापिताभ्राता निवासश्शरणं सुहृद्गतिर्नारायणः"। इत्यादिषु। अतो निरुपाधिकशेषिणि सर्वप्रकारनिरतिशयभोग्ये भगवति परमात्मनि शेषवृत्तिलाभ एक एव परमार्थतः

पुरुषार्थः। यतो भगवति शेषवृत्तिलाभस्य निरतिशयानन्द-हेतुता। अत एव मुक्तस्य भगवति शेषवृत्तिलाभेनानन्दसा-गरनिमज्जनं श्रूयमाणमुपपद्यते। श्रूयते हि मुक्तस्य भगवदनु-यात्रादि शेषवृत्तिलाभेन निरतिशयानन्दः। तैत्तिरीयोपनिषदि भृगुवल्ल्यां। "स य एवं वित्। अस्माल्लोकात्प्रेत्य। एत-मानन्दमयमात्मानमुपसंक्रम्य। इमान् लोकान् कामान्नीकाम-रूप्यनुसंचरन्। एतत्सामगायन्नास्ते। हावु हावु हावु। अह-मन्नमहमन्नमहमन्नम्। अहमन्नादोहमन्नादोहमन्नादः। अहग्ग् श्लोककृदहग्ग् श्लोककृत् अहग्ग् श्लोककृत्। अहमस्मि प्रथमजाऋतस्य। पूर्वं देवेभ्यो अमृतस्य नाभाइ। यो माद-दाति स इदेवमावाः। अहमन्नमन्नमदंतमाद्मि। अहं विश्वं भुवनमभ्यभवां। सुवर्णज्योतीः"। इति। अयमर्थः। यः पूर्वोक्तप्रकारेणानन्दमयमात्मानमुपास्ते सः अस्माल्लोकात्प्रेत्य। अत्र उताविद्वानमुंलोकं प्रेत्य। कश्चनगच्छतीति प्रश्नवाक्यस्थं अमुंलोकं इत्येतदनुषज्यते। ततश्च अस्माल्लोकात् अमुंलोकं परमेव्योमन् सोश्नुते सर्वान् कामान् सहेतिपूर्वोक्तं परमव्यो-मशब्दितं भगवल्लोकं गत्वा। अत्रार्चिरादि मार्गेणेत्यर्थसिद्धम्। अनियमाधिकरणे सर्वेषां ब्रह्मविदामर्चिरादिमार्गेण गमनस्य निर्णीतत्वात्। एतं पूर्वोक्तमहामहिमयुक्तं आनन्दमयं अप-रिच्छेद्यानन्दगुणविशिष्टं आत्मानं सर्वेषां धारकं नियंतारं शेषिणंच परमात्मानं उपसंक्रम्य तत्समीपं प्राप्येत्यर्थः। कामान्नी कामाः सोश्नुते सर्वान्कामानिति प्रागुक्ताः कमनीयाः कल्याणगुणाः त एवान्नं निरतिशयभोग्यं तदस्यास्तीति कामान्नी, निरतिशयभोग्यभूतान्भगवदीयान्कल्याणगुणाननु-

भवन् कामरूपी कामरूपाणि तदीयकल्याणगुणगणानुभवज-नितनिरतिशय प्रीतिकारित तत्तदवसरोचित नैकविधस्वामि परिचरणोचितानि । स एकधाभवति त्रिधाभवतीत्यादिश्रुत्यंत-राम्नातानि स्वेच्छासिद्धानि दिव्यरूपाणि तद्वान् इमान् लोकान् । सोकामयत । बहुस्यां प्रजायेयेति । सतपोतप्यत । स तपस्तप्त्वा । इदं सर्वमसृजतेति स्वलीलार्थं भगवता सृष्ट-तयोक्तानन्यांश्च नित्यसिद्धान्भगवद्विभूतिभूतानखिलान् लो-कान् अनुसंचरन् येनयेनधातागच्छति तेनतेन सहगच्छति तद्यथातरुणवत्सा वत्सं वत्सो वामातरं छायावासत्वमनुव्रजेत् तथेति श्रुत्यन्तरोक्तप्रक्रियया भगवति लीलारसवशेन तत्तल्लो-केषु संचरति तमनुसंचरन् तदनुयात्रां कुर्वन् । अत्र मुक्तस्य भगवदनुधावने प्रथमदृष्टांतेन भगवति निरतिशयस्नेहः द्विती-यदृष्टांतेन तद्विश्लेषासहिष्णुत्वं तृतीयदृष्टान्तेन " स्थितस्थिता-मुच्चलितः प्रयाता " मित्याद्युक्तरीत्या तत्पारतंत्र्यंच व्यज्यते । एतत् वक्ष्यमाणं सामगायन्नास्ते । सर्वकालं वक्ष्यमाण साम-गानेन मोदमान आस्त इत्यर्थः । हावु हावु हावु अहो अहो अहो । अतिक्षुद्रेपि मयि कोयं भगवतः प्रसादः , येन नित्यसूरिवदीदृशं भगवतः परिपूर्णानुभवम् लब्धवानस्मीति विस्मयते । विस्मयस्य अपरिमितत्वद्योतनाय त्रिरुक्तिः । अह-मन्नमिति । अहमन्नं भोग्यभूतः । परमात्मना स्वभोगार्थं परि-ग्रहेणाहमस्य भोग्यभूतस्संवृत्त इति स्वस्य कृतार्थतामनुसं-धत्ते । अत्राप्यहो अहो इत्यनुषज्यते । एवमुत्तरेष्वप्यनुषंगो-द्रष्टव्यः । अहमन्नादः । भगवद्रूपस्यान्नस्य निरतिशयभोग्य-वस्तुनोहं भोक्तासंवृत्त इत्यसंभावितार्थप्राप्त्या आनंदसागरे

निमज्जाति । अहं श्लोककृद् । "तद्विप्रासोविपन्यवो जागृवांसस्समिन्धत" इत्युक्तरीत्या अहमस्य स्तोतासंवृत्तोस्मीति धन्यमात्मानं मन्यते । "अहमस्मि प्रथमजाऋतस्य" । ऋतस्य आदरणीयस्य भगवतोहं प्रथमजाप्रथमोजातोस्मि अग्रगण्यस्संवृत्तोस्मीत्यर्थः । पूर्वं देवेभ्यः । यत्र पूर्वे साध्यास्संतिदेवा इति श्रुत्युक्ता येदेवास्सूरयः । तेभ्यः पूर्वं पूर्वः अस्मि दिव्यसूरि परिषदि प्रथमोस्मीत्यर्थः । अमृतस्य अमृतत्वस्य नाभिः आश्रयोस्मि । यः आचार्यः मामांददाति भगवते समर्पितवान् स आचार्यः एवमुक्तप्रकारेण आवाः मां रक्षितवान् । उक्तप्रकारेण परिपूर्णब्रह्मानुभवानन्दं प्रापय्य रक्षितवानित्यर्थः। अहमन्नमन्नमदंतमाद्मीति स्वस्य परमात्मनि भोग्यभोक्तृभावेनावस्थानं पुनःपुनरनुसंधाय तृप्यति अत्र हि स्तुत्यनुयात्रादि भगवच्छेषवृत्तिलाभेन मुक्तस्य निरतिशयानन्दानुभवस्स्फुटः । तदेवं भगवति शेषवृत्तिलाभस्य निरतिशयानन्दहेतुतया तन्मिश्राया मुक्तेर्नापुरुषार्थत्वशंकावकाशः ॥

नन्वस्तु भगवति शेषवृत्तिलाभस्य परमपुरुषार्थत्वम् । "जक्षत्क्रीडन्नममाणस्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वासयदि पितृलोककामोभवती"त्यादिश्रुत्युक्तानां स्त्रीभिस्सहक्रीडादीनां कथं भगवच्छेषवृत्तिरूपता । उच्यते । योयं जक्षणक्रीडनादिर्व्यापारविशेषो मुक्तमधिकृत्य श्रूयते । नासौ विषयोपभोगरूपः । अपि तु ब्रह्मानुभव परिवाहभूतो व्यापारः । तथाहि मुक्तः स्वरूपरूपगुणविभवैर्निरतिशयप्रियं परं ब्रह्म परिपूर्णमनुभवं स्तदनुभवजनितहर्षप्रकर्षेण संकल्पमात्रसिद्धैश्शुद्धसत्वमयैश्शरीरैर्नर्तनादि संभ्रमक्रीडां कुर्वन्सङ्कल्पमात्र प्रभवैर्बांधवैस्सह संकल्पमात्रसिद्धानौपचारिक सांस्पर्शिकाभ्यवहा-

रिकादीन्भोगान्भगवते उपहरन् भगवद्भुक्तोज्झितंच भक्त्यतिशयेनाभ्यवहरन्नन्या अपि मनोरथानुरूपास्सपर्यास्सर्वं कालं कुर्वन्रमते । तदिदमाहश्रुतिः । "स एकधाभवति त्रिधाभवति । स यदि पितृलोककामोभवति । स यद्यन्नपानकामोभवति स यदि गंधमाल्यकामोभवति । स यदि गीतवादित्रकामोभवति । जक्षत्क्रीडन्रममाणस्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वेत्यादिका" । अतो मुक्तव्यापारास्सर्वेपि भगवदनुभवजनित प्रीतिपरिवाहभुतास्तत्परिचर्याविशेषा एवेति । तत्सिद्धमविभागाधिकरणे कर्मकृतस्वरूपतिरोधाननिवृत्या तदेकपारार्थ्यं पारतंत्र्यपर्यवसित परब्रह्म पृथक्सिद्धिविशेषणतया स्वात्मानुभवस्सिद्धान्तित इति । अनेन च मुक्तस्य परमात्मा पृथक्सिद्धविशेषणतारूपस्वात्मयाथात्म्यानुभव व्यवस्थापनेन सर्वेषामेव वस्तूनां तदपृथक्सिद्धिविशेषणतारूप याथात्म्यानुभवस्सिद्धः । न्यायतौल्यात् । कर्मकृततिरोधानेन हि सर्ववस्तुयाथात्म्याननुभवः । तिरोधायक कर्मनिवृत्तौच सर्वेषामेव वस्तूनां परमात्मा पृथक्सिद्धविशेषणतैक स्वरूपत्वरूप याथात्म्यस्य दृष्टत्वेन तेषामपि तथैवानुभवावश्यं भावात् । कंठतस्स्वात्मयाथात्म्यानुभवप्रदर्शनं पुनः प्रागुक्तरीत्या उत्तरसूत्रेषु निरूपयिष्यमाणानां मुक्तव्यापाराणां भगवत्परिचर्यारूपत्वज्ञापनेन सांसारिकफलत्वशङ्काव्यावर्तनाय । ततश्चात्र ब्रह्मव्यतिरिक्त सर्ववस्तूनां ब्रह्म पृथक्सिद्धविशेषणतया ब्रह्मणश्च स्वेतरसर्ववस्त्वपृथक्सिद्धविशेष्यतया मुक्तानुभवगोचरत्व प्रदर्शनेन मुक्तस्य सकलकल्याणगुणविभूतिविशिष्ट ब्रह्मानुभवरूप परिपूर्णब्रह्मानुभवोऽत्र सूत्रकारैः व्यवस्थापितः इति फलितम् । एवमविभागाधिकरण प्रभृतिभिरधिकरणैः मुक्तस्य निरतिशय-

प्रिय ब्रह्मानुभवजनित प्रीतिकारित निरतिशयभोग्यभूत सर्व-विध परिचर्यापर्यन्त परिपूर्ण ब्रह्मानुभवमभिधाय, जगद्व्यापार-वर्जाधिकरणे ब्रह्मणा समं भोगसाम्य प्रतिपादनेन मुक्तेर्ब्रह्म-सायुज्यरूपता व्यवस्थापिता । तथाच तदधिकरणे सूत्रम् । "भोगमात्रसाम्यालिङ्गाच्च" इति । मुक्तस्यापि ब्रह्मण इव जगत्सृष्ट्यादि व्यापारोस्ति नवेति संशये "यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् । तदाविद्वान् पुण्य-पापे विधूय निरञ्जनः परमं साम्यमुपैति" इत्यादिषु मुक्तस्य परब्रह्मणा परमसाम्यापत्तिश्रवणात् जगत्सृष्ट्यादि व्यापारविरहे परमसाम्यायोगात् अस्त्येव मुक्तस्यापि जगद्व्यापार इति पूर्व-पक्षे प्राप्ते जगत्सृष्ट्यादि व्यापारस्य मुक्तसाधारणत्वे तस्य ब्रह्म-लक्षणत्वायोगेन जगज्जन्मादिकारणत्वस्य ब्रह्मलक्षणत्वाभि-धायि श्रुतिविरोधप्रसङ्गेन नास्ति मुक्तस्य जगद्व्यापार इति । "जगद्व्यापारवर्जं प्रकरणादसंनिहितत्वाच्च" इति सूत्रेण सिद्धान्तमभिधाय, कथं तर्हि परमसाम्यश्रुत्युपपत्तिरिति शङ्का-परिहारार्थमुक्तं भोगमात्रसाम्यलिङ्गाच्चेति । सूत्रमिदं पूर्वमेव व्याख्यातम् ॥

एवं मुक्तेः परिपूर्णब्रह्मानुभवरूप परब्रह्मसायुज्यरूपतां व्यवस्थाप्य तथाविधसायुज्यं प्राप्तस्य पुनः कदापि न संसार-प्राप्तिरिति अनावृत्तिश्शब्दादिति सूत्रेणाभिधाय शास्त्रमुपसंहृ-तम् । अतः प्रकृतिमण्डलस्योपरिष्टात् अप्राकृतदेशविशेषे पर-ब्रह्मसमानभोगत्वरूप तत्सायुज्यप्राप्तिरेवा पुनरावृत्तिलक्षण मोक्षपुरुषार्थ इति शारीरकमीमांसाप्रणेतुः भगवतो वेदव्यासस्य सिद्धान्त इति सिद्धम् ॥

॥ इति श्रीव्याससिद्धान्तमार्ताण्डे द्वितीयः परिच्छेदः ॥

# श्री व्याससिद्धान्तमार्ताण्डे तृतीयः परिच्छेदः ॥

अतीतेन परिच्छेदद्वयेन श्रियःपतिर्नारायणः परंब्रह्म अप्राकृतदेशविशेषे तत्सायुज्यप्राप्तिरेवापुनरावृत्तिलक्षणमोक्षपुरुषार्थइति शारीरकमीमांसाप्रणेतुर्भगवतोवेदव्यासस्य सिद्धान्तइत्ययमर्थस्तस्यैव सूत्राक्षरस्वरसलभ्यत्वनिरूपणेन समर्थितः, इदानीं तत्प्रणीतस्फुटार्थप्रबंधांतरसंवादादप्ययमेव तत्सिद्धान्तइति निरूप्यते। शारीरकमीमांसाप्रणेत्रा भगवता वेदव्यासेन महाभारते तत्रतत्र श्रियःपतिर्नारायणः परंतत्वमिति न्यायानुगृहीतवेदान्तवाक्यैर्निर्णीयतइति, अप्राकृतदेशविशेषावस्थिततत्प्राप्तिपूर्वकतत्सायुज्यप्राप्तिरेव मोक्षपुरुषार्थइतिच स्फुटं प्रत्यपादि, तथाहि—मोक्षधर्मपर्वणि सप्तपञ्चाशदधिकत्रिशततमाध्याये भगवान् वेदव्यासआह, 'तत्वंजिज्ञासमानानां हेतुभिस्सर्वतोमुखैः, तत्वमेकोमहायोगीहरिर्नारायणःपरः,' इति. अत्र तत्वपदं जगत्कारणपरतत्वपरं; पूर्वश्लोके कारणवाक्यानां सर्वेषां नारायणएव तात्पर्यपर्यवसानभूमिरिति प्रतिज्ञाय तस्यैवार्थस्योपपादनाय प्रवृत्तत्वादस्य श्लोकस्य। पूर्वत्रहि,' 'प्रधानंकारणंयेषां पुरुषश्चापि कारणं, स्वभावश्चैव कर्माणि दैवंयेषांचकारणं। पंचकारणसंख्यातोनिष्ठा सर्वत्रवै हरिरिति" श्लोके प्रधानादिकारणतावादिनां मतान्यनूद्य निष्ठासर्वत्रवैहरिरित्युक्तं। तत्तद्वादिभिः किंचिद्वाक्यपर्यालोचनया प्रधानादीनां कारणत्वाभ्युपगमेऽपि सर्वेषु वेदान्तवाक्येषु तात्पर्यपर्यवसानभूमिर्नारा-

यणइति तदर्थः, ततश्च परतत्वं ज्ञातुमिच्छतां सर्वतोमुखैरनेकमुखैर्हेतुभिर्न्यायैर्नारायणएकस्तत्वंनिष्पद्यतइति श्लोकार्थः ॥

अयंभावः, जगत्कारणवादिवेदान्तवाक्येषु यज्जगत्कारणतया विवक्षितं तदेव परतत्वं। कारणवाक्यानांचानेकविधत्वान्नयायसंचारेण विना नार्थोनिर्णेतुं शक्यः, तथाहि—कारणवाक्येषु कानिचिदनुवादरूपाणि, कानिचित्साधारणशब्दैः कारणवस्त्वाभिधायीनि, अन्यानि कानिचिद्विशेषे प्रसिद्धैश्शब्दैस्तदभिधायीनि, कानिचित्पुनश्चेतनविशेषेषु प्रसिद्धैश्शब्दैस्तद्वाचीनि, तद्यथा—"यतोवाइमानिभूतानि जायन्ते, येनजातानिजीवन्ति, यत्प्रयंत्यभिसंविशन्ति, तद्विजिज्ञासस्व, तद्ब्रह्मेती" त्यादीन्यनुवादरूपाणि, यज्जगज्जन्मादिकारणं तद्ब्रह्मेति कारणमनूद्य ब्रह्मत्वविधायकत्वात्तेषां। "सदेवसोम्येदमग्रआसीत्" "ब्रह्मवा इदमग्रआसीत्" "आत्मावाइदमेकएवाग्रआसीत्" इत्यादीनि साधारणैश्शब्दैः कारणवस्त्वभिधायीनि, सद्ब्रह्मात्मादिशब्दानां बह्वर्थेषु प्रयुज्यमानत्वात्। "सर्वाणिहवा इमानिभूतान्याकाशादेव समुत्पद्यन्ते, आकाशंप्रत्यस्तंयन्ती"-त्यादीन्यचेतनविशेषे भूताकाशादौ प्रसिद्धैराकाशादिशब्दैः कारणंवस्त्वभिदधति; "प्राणोऽस्मिप्रज्ञात्मातंमामायुरमृतामित्युपास्वेती"दमिन्द्रवाक्यं कारणत्वव्याप्यंमुमुक्षूपास्यत्वमिंद्रस्यवददिन्द्रं जगत्कारणमाह, "हिरण्यगर्भस्समवर्तताग्रेभूतस्यजातः पतिरेकआसीत्' 'इत्यादीनि चेतनविशेषे चतुर्मुखे रूढैर्हिरण्यगर्भादिशब्दैर्जगत्कारणमभिदधति, 'यदातमस्तन्नदिवानरात्रिर्नसन्नचासच्छिवएवकेवलः" इत्यादीनि शिवरुद्रादिशब्दैरुद्रेप्रसिद्धैः कारणवस्तु ब्रुवते, "एकोहवैनारायणआसीन्नब्रह्मानेशानः"

इत्यादीनि पुनर्देवताविशेषासाधारणेन नारायणशब्देन जगत्कारणमुपदिशंति ॥

तदेवं कारणवाक्यानामनेकरूपतया न्यायसंचारेण विना तैरर्थनिर्णयायोगात् न्यायानुगृहीतैरेव तैरर्थोनिर्णयः, सचन्याय-इत्थंप्रवर्तते—यानि कारणवाक्यानि निराकांक्षप्रतिपत्तिजनकतासिद्धये यद्वाक्यमपेक्षंते तानि तदेकार्थतां भजन्ते। तत्रानुवादरूपाणि प्रापकवाक्यमपेक्षन्ते, प्रापकेषुच सामान्यशब्दघटितानि विशेषसमर्पकं वाक्यं, यानि पुनस्सर्वाणिहवाइमानिभूतान्याकाशादेव समुत्पद्यन्तइत्यादीन्याकाशादिविशेषसमर्पकतया प्रतीयमानानि कारणवाक्यानि, तान्यप्याकाशादिशब्दानां रूढ्यर्थपरिग्रहे आकाशादेर्भूतशब्दोपस्थाप्याचित्संसृष्टचेतनकारणत्वाद्यनुपपत्त्या बाधितार्थकत्वप्रसंगेन रूढिं परित्यज्य यौगिकत्वस्यैवाश्रयणीयतया न विशेषसमर्पणक्षमाणि। यदपि मामुपास्स्वेतींद्रवाक्यं तस्य कारणत्वाक्षेपकं। तदपि न विशेषोपस्थापनसमर्थम्, "प्रजापतिरिंद्रमसृजत" इत्यादिषु सृज्यत्वेन ब्रह्महत्याद्यभिभूतत्वेनचावगतस्य प्रासिद्धेंद्रस्य परमकारणत्वमोक्षोपायोपासनविषयत्वासंभवेन वाक्यस्य तत्पर्यवसिततायावक्तुमयुक्तत्वात्। इयान्विशेषः,—आकाशकारणतावादिवाक्ये आकाशशब्दस्य रूढ्यर्थबाधेन रूढेः परित्याज्यतैव, इंद्रवाक्येतु इन्द्रशब्दरूढेर्नपरित्यागः, त्वाष्ट्रवधादेः त्रिशीर्षाणं त्वाष्ट्रमहनमित्यादिप्राकरणिकवाक्यावगतस्येंद्रशब्दरूढ्यर्थाद-न्यत्रान्वयायोगात्—नापि तस्य रूढ्यर्थे विश्रान्तिः, मोक्षोपायोपासनाविषयत्वादेस्तत्र बाधात, परंतु रूढ्यर्थद्वारा अन्यत्रैव क्वचिद्विश्रान्तिमभ्युपगम्य त्वाष्ट्रहननादेर्विशेषणे मुमुक्षूपास्य-

त्वादेश्च विशेष्येऽन्वयोंऽगीकरणीयः। इत्थंच मामुपास्स्वेतींद्रवाक्यस्यापि नापेक्षितविशेषोपस्थापकता। यान्यपि "हिरण्यगर्भस्समवर्तताग्र" इत्यादीनि चतुर्मुखरूढहिरण्यगर्भादिपदघटितानि वाक्यानि, तेष्वपि हिरण्यगर्भादिपदानां रूढयर्थांगीकारे, "योब्रह्माणंविदधातिपूर्वंयोवैवेदांश्चप्रहिणोतितस्मै," इत्यादिषु कार्यत्वेनावगतस्य हिरण्यगर्भादिपदरूढयर्थस्य परमकारणत्वानुपपत्त्या तेषां रूढिमपहाय यौगिकताया एवाश्रयणीयतया तेषामपि नविशेषबोधकतासंभवः। यानिच "यदातमस्तन्नदिवानरात्रिर्नसन्नचासच्छिव एवकेवल" इत्यादीनि रुद्ररूढिमच्छिवादिपदाचिह्नितानि वाक्यानि, तेष्वपि शिवादिशब्दानां नरुद्राख्यरूढ्यर्थस्वीकारसंभवः "अथपुनरेवनारायणस्सोऽन्यत्कामोमनसाध्यायत, तस्यध्यानांतस्थस्यललाटात्त्र्यक्षश्शूलपाणिः पुरुषोऽजायत, नारायणाद्रुद्रोजायते," इत्यादिषु सृज्यत्वेन प्रतिपादितस्य तस्य परमकारणत्वायोगात्॥ ततश्च योग्यार्थांतरपरतायाएव स्वीकर्तव्यत्वात् तेषामपि नविशेषोपस्थापकता, अपितु एकोहवैनारायणअसीन्नब्रह्मानेशानइत्यस्यैवापेक्षितविशेषोपस्थापकता युक्ता, अयोग्यताविरहात्, अतः कारणवाक्यानि सर्वाणि निराकांक्षप्रतिपत्तिसिद्धये तत्साकांक्षतया तदेकार्थानि संति नारायणमेव जगत्कारणमभिदधतइति सएवपरतत्त्वमिति। अत्र ब्रह्मविष्णुरुद्राणां, "हिरण्यगर्भस्समवर्तताग्रे" एकोहवैनारायणआसीत्, यदातमस्तन्नदिवानरात्रिर्नसन्नचासच्छिवएवकेवल" इत्यादिभिः कारणत्वे "सर्वमिदं ब्रह्मविष्णुरुद्रेंद्रास्तेसर्वे संप्रसूयंते" इत्यथर्वशिखावाक्येन कार्यत्वेचाविशेषेण श्रूयमाणे कारणवाक्यानां नारायणे पर्यव-

सानं प्रदर्शयन्भगवान्वेदव्यासः ब्रह्मरुद्रयोरुत्पत्तिवाक्यानां तयोः परमकारणत्वबाधकतां ततएव कारणवाक्यस्थानां हिरण्यगर्भशिवादिपदानां रूढेः परित्याज्यतां विष्णोरुत्पत्तिवाक्यस्य तदबाधकतां ततएव कारणवाक्यस्थनारायणपदस्य रूढेरपरित्याज्यतांचाभिप्रैति ॥

अयमत्राभिप्रायः, अथर्वशिखायां, "सर्वमिदंब्रह्मविष्णुरुद्रेंद्रास्तेसर्वेसंप्रसूयन्ते, सर्वाणिचेंद्रियाणिसहभूतै" रित्यत्र न ब्रह्मादीनामुत्पत्तिर्विधीयते, तस्य वाक्यस्य "कारणंतुध्येय" इति ध्येयप्रश्नोत्तरध्येयविधिवाक्यशेषत्वेन तत्र कस्यचिदर्थस्य विधानायोगात्, ततश्च श्रुत्यंतरसिद्धा ब्रह्मादीनामुत्पत्तिरनूद्यते, तदनुवादश्च ध्येयत्वेन विहितकारणवस्तुस्तुतये, इत्याश्रयणीयं। ततश्चाथपुरुषोहवैनारायणोऽकामयतप्रजास्सृजेयेति-नारायणात्प्राणोजायतेमनस्सर्वेंद्रियाणिच, खंवायुर्ज्योतिरापः पृथिवीविश्वस्यधारिणी, नारायणाद्ब्रह्माजायते, नारायणाद्रुद्रोजायते, नारायणादिंद्रोजायते, एकोहवैनारायणआसीन्नब्रह्मानचशंकरः, समुनिर्भूत्वासमचिंतयत, ततएतेव्यजायंतविश्वेहिरण्यगर्भोऽग्निर्यमवरुणविष्णुरुद्रेंद्राः, इत्यादिषु श्रुतिषूपदिष्टा ब्रह्मादीनामुत्पत्तिरत्र संक्षेपेणानूद्यतइत्यंगीकरणीयं। नारायणोपनिषदादिषूपदिश्यमाना ब्रह्मरुद्रेन्द्रादीनांविष्णुव्यतिरिक्तानामुत्पत्तिः कर्मकृतैव, तदुत्पत्तेरैच्छिकत्वे प्रमाणाभावेनोत्सर्गतः प्राप्तायाः कर्ममूलकतायादुरपह्नवत्वात्, विष्णोरुत्पत्तिस्त्वैच्छिकी। "तस्ययथाकप्यासंपुण्डरीकमेवमक्षिणीतस्योदितिनामसएषसर्वेभ्यःपाप्मभ्यउदितः," "अपहतपाप्मादिव्योदेवएकोनारायण" इत्यादिषु तस्य कर्मवश्यत्वाभावश्रवणेनोत्सर्गतःप्रा-

स्रायाःकर्ममूलकतायास्तदुत्पत्तावकर्मवश्यत्वश्रुत्याऽपोदितत्वात् तादिदं विष्णोरवतारस्याकर्मकृतत्वं श्रुत्यैव स्पष्टीकृतं "अजायमानोबहुधाविजायते, तस्यधीराःपरिजानन्तियोनिमिति" अत्रहि भगवतोजन्मनोनिषेधोविधिश्च श्रूयते, तत्रविधिनिषेधयोरेकस्मिन्विषयेऽसंभवेन लोकप्रसिद्धस्य जन्मनोनिषेधः, तद्विलक्षणस्य तस्य विधिरित्यवसीयते, लोकप्रसिद्धंच कर्मकृतं तत्फलभोगार्थं त्रिगुणद्रव्यारब्धशरीरसंयोगरूपं, अतस्तद्विलक्षणमकर्मकृतमतत्फलभोगार्थमप्राकृतशरीरसंबंधरूप-मिति तदेव विधिविषयः, अतएव तस्य धीराः परिजानन्ति योनिमित्युत्तरवाक्यं संगच्छते, तस्य भगवदीयजन्मनः योनिं कारणं धीरा ब्रह्मविदः परिजानन्तीतिहि तदर्थः, भगवज्जन्मनोऽस्मदादिजन्मतः विलक्षणत्वाभावे तत्कारणं धीरैरेव परिज्ञायत इत्युक्तिर्हि अयुक्ता स्यात्, अतोभगवज्जन्मनस्स्वेच्छामूलकत्वेनास्मदादिजन्मतोवैलक्षण्यमभिप्रेत्यैव तस्यधीराः परिजानन्तियोनिमित्युक्तिरिति तथाविधविलक्षणजन्मैव विधिविषयः, यद्यपि विष्णूत्पत्तेरैच्छिकत्वे ब्रह्मविष्णुरुद्रेंद्रास्ते सर्वे संप्रसूयंतइत्यत्र ब्रह्मरुद्रेंद्राणामुत्पत्त्यनुवादस्य महामहिमवतां ब्रह्मरुद्रादीनामप्युत्पादकं तदिति तेभ्योऽप्यतिशयितमहिमवत्ताद्योतनेन ध्येयवस्तुस्तुत्युपयोगित्वेऽपि विष्णूत्पत्त्यनुवादस्य न तथास्तुत्युपयोगिता, तथाप्यैच्छिक्यास्तदुत्पत्तेरुपासकानुजिघृक्षामूलकत्वेन ध्येयवस्तुनउपासकेषु अपारकारुण्यसौशील्यसौलभ्यादिलोकोत्तरगुणव्यंजकतया ततस्तुत्युपयोगिता द्रष्टव्या ॥

इत्थंच ब्रह्मरुद्रादीनामुत्पत्तेः कर्मकृतत्वेन स्वातंत्र्यभ-

ञ्जकतया तस्याएव परमकारणत्वबाधकता, विष्णूत्पत्तेस्तु स्वेच्छाकृतत्वेन स्वातंत्र्यभंजकत्वाभावान्नतस्याः परमकारणत्वबाधकतेति । अत्रश्लोके हेतुभिस्सर्वतोमुखैरित्यत्र हेतुभिरिति बहुवचनप्रयोगेण हेत्वंतरैरपि कारणवाक्यस्थानां हिरण्यगर्भशिवादिशब्दानां नारायणेतरविशेषसमर्पणाक्षमतां नारायणशब्दस्यैव विशेषसमर्पणक्षमतांचाभिसंधत्तइत्यवगम्यते, तथाहि, अंभस्यनुवाकस्थेन, "अद्भ्यस्संभूतोहिरण्यगर्भइत्यष्टौ" इति वाक्येन हिरण्यगर्भस्समवर्तताग्रइत्यष्टर्चस्य, अद्भ्यस्संभूतइत्याद्यनुवाकेन सममेकवाक्यता, पाठक्रमेण, अद्भ्यस्संभूतइत्यनुवाकस्य तत्पूर्वताच प्रतीयते, ततश्चाद्भ्यस्संभूतइत्यनुवाकघटक वेदाहमेतंपुरुषंमहांतमितिवाक्यस्थया प्रथमश्रुतत्वेन लक्ष्मीपतित्वलिंगसहकृतत्वेनच प्रबलया पुरुषश्रुत्या चरमश्रुतत्वेन दुर्बलायाहिरण्यगर्भश्रुतेर्बाधितत्वेन तस्याः पुरुषश्रुत्यनुरोधेन नेयतया नचतुर्मुखप्रतिपादनक्षमता, एवं यदातमस्तन्नदिवानरात्रिर्नसन्नचासाच्छिवएवकेवलइति मंत्रे शिवशब्दस्यापि न रुद्रसमर्पकतासंभवः, तथाहि—तस्ययदातमइतियद्वृत्तघटितत्वेनानुवादरूपतया प्रलयावस्थतमःप्रापकवाक्यमिह पुरोवादइत्याश्रयणीयं, तच्च सुबालोपनिषद्वाक्यमेव, तत्रैव "महानव्यक्तेलीयते, अव्यक्तमक्षरेलीयते अक्षरंतमसिलीयतेतमःपरेदेवएकीभवति परस्तान्नसन्नासन्नसदसदिति' प्रलयावस्थतमःप्रतिपादनदर्शनात् । तस्यांचोपनिषदि नैवेहकिंचनाग्रआसीत्, दिव्योदेवएकोनारायण' इत्यादिना सकलेतरप्रपंचाभावदशायामेकस्य नारायणस्यावस्थानप्रतिपादनेन तमःपरे देवएकीभवतीति तमोलयस्थानत्वेनोक्तः, परोदेवोन्नारायणएवेति स्फुटं

प्रतीयमानतया नारायणस्यैव लयस्थानत्वलाभेन तस्यैव कारणत्वं तदुपनिषत्प्रतिपाद्यमितिसिद्धं, ततश्च तत्प्राप्तार्थानुवादरूपेऽस्मिन्वाक्ये पुरोवादप्राप्तनारायणाख्यदेवताविशेषात्मककारणावरुद्धे कालविशेषे रुद्रस्य कारणतयाऽवस्थानप्रतिपादनासंभवेन तत्रत्याशिवशब्दस्य पुरोवादानुरोधेन नारायणपरत्वेन नेयतया न रुद्रप्रतिपादनक्षमता। किंच—महोपनिषदि, "एकोहवैनारायणआसीन्नब्रह्मानेशानइति," पैंगिरहस्ये, "एकोहवैनारायणआसीन्नब्रह्मानचशंकरइतिच" ब्रह्मरुद्रादीनां प्रलयकाले सत्तानिषेधात् यदातमइत्यत्र रुद्रस्य प्रलयकाले सत्ताविधानांगीकारे श्रुतिष्वेकत्र प्रलयकाले रुद्रस्य सत्तानिषेधः, अपरत्र तस्य तत्काले सत्ताविधिरिति विप्रतिषिद्धार्थकथनेन श्रुतीनामसामंजस्यप्रसङ्गः। महोपनिषदादिषु सत्तानिषेधः कार्यशिवविषयः यदातमइत्यत्र सत्ताविधिस्तु परमशिवविषयइति न विप्रतिषेधइतितु नयुक्तं; परमशिवः कार्यशिवइति शिवद्वयसद्भावे प्रमाणाभावात्। प्रलयदशायां शिवसद्भावग्राहकदर्शितश्रुतिरेव तत्र प्रमाणमिति तु नयुक्तं वक्तुं; 'धर्मिकल्पनातोवरं धर्मकल्पन'मिति न्यायेन अप्रसिद्धपरमशिवाख्यधर्म्यंतरकल्पनामपेक्ष्य प्रलयकालवर्तित्वेन श्रुत्यंतरप्रतिपादिते नारायणाख्ये धर्मिणि तत्कालावस्थितदेवताविशेषबोधकदर्शितश्रुतिवाक्यस्थशिवपदार्थत्वकल्पनायाएवोचितत्वात्। वस्तुतस्तु "शाश्वतंशिवमच्युतं नारायणंमहाज्ञेय" मित्यादिषु शिवशब्दस्य नारायणे प्रयोगदर्शनात् "शुद्धे त्रिषु शिवाक्रोष्ट्र्या" मित्याद्यभिधानकोशावगतशुद्धिमच्छक्तिकस्य शिवशब्दस्य "निष्कलङ्कोनिरंजनोनिर्विकल्पोनिराख्यातश्शुद्धोदेव

एकोनारायण" इति नारायणोपनिषदि नित्यशुद्धत्वेनाम्नाते नारायणे शुद्धत्वरूपप्रवृत्तिनिमित्तपुरस्कारेण प्रयोगोपपत्तेः पुरोवादभूतसुबालोपनिषत्प्राप्ततमश्शब्दितप्रकृतिलयस्थानत्वशंकितविकाराद्यशुद्धिव्यावर्तनेन नित्यशुद्धत्वज्ञापनाय शिवशब्देन जगदुपादानभूतनारायणनिर्देशस्य प्रयोजनवत्तरत्वाच्चोक्तश्रुतिवाक्यस्थशिवशब्दस्य नारायणपरत्वे नकस्यचिदपि धर्मस्य कल्पनीयता, अतः प्रकृतशिवशब्दस्य नरुद्रप्रतिपादकतासंभवः ॥

अपिच कारणवस्तुप्रतिपादिकाश्श्रुतयोद्विविधाउपलभ्यन्ते, काश्चिन्नारायणपदघटिताः, अन्याश्चशिवादिपदघटिताः, द्विविधानामपि वाक्यानामेकार्थपर्यवसायित्वमवश्याभ्युपेत्यं, अन्यथा कारणवस्तुद्वित्वापत्तेः, नचेष्टापत्तिः, कारणस्य निस्समाभ्यधिकत्वश्रुतिविरोधात्, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाविरोधाच्च, तासामेकार्थपर्यवसानंच शिवादिशब्दै र्नारायणशब्दस्य स्वार्थात्प्रच्यावनेनवा नारायणपदेन शिवादिशब्दानां स्वार्थात्प्रच्यावनेनवा स्यात्, तत्र नारायणपदस्य बलीयस्त्वेन तदेव शिवादिशब्दानां स्वार्थात्प्रच्यावने प्रभवति, नतु शिवादयश्शब्दानारायणपदस्य स्वार्थात्प्रच्यावने, तेषां दुर्बलत्वात्, तथाहि—नारायणपदंतावत् निरवकाशत्वाद्बलीयः, नहि नारायणपदस्य योगेनवा रूढ्यावा नारायणादन्यत्र वृत्तिस्संभवति, केवलावयवशक्त्या वृत्त्यङ्गीकारे णत्वानुपपत्तेः, "पूर्वपदात्संज्ञायामग" इति सूत्रेण संज्ञायामेव णत्वविधानात्, रूढिस्त्वर्थांतरे नसंभवत्येव, अनुशासनविरहात्, ततश्च नारायणपदस्यार्थांतरे कथंचिदपि वृत्त्यसंभवात्तन्निरवकाशं, शिवा-

दिशब्दास्तु सावकाशाः, तेषां नानार्थेष्वनुशासनात्, अनुशिष्यतेहि, "शुद्धेत्रिषुशिवाक्रोष्ट्रया"मिति, "ईशेश्वरौप्रभौरुद्रे" इति, "हरारुद्राग्निगर्दभा' इतिचैवमादि, रुद्रशब्दस्यापि रोदयतीतिव्युत्पत्त्या अर्थांतरे वृत्तिस्संभवति, शंभुशब्दश्च। "शंभुस्स्वयंभूर्द्रुहिण इत्यर्थांतरेऽपिपठ्यते, ततश्च यथायोगं शुद्धाद्यर्थांतरक्लृप्तरूढयावा योगेनवा शिवशंभ्वादिशब्दानां नारायणेवृत्तिसंभवात्, "विश्वाक्षंविश्वशंभुवं" "शाश्वतंशिवमच्युत" मित्यादिषु तत्र प्रयोगदर्शनाच्च ते साधारणाः, अतोऽसाधारणत्वेन निरवकाशतया बलीयसा कारणवाक्यस्थेन नारायणपदेन साधारणतया संभवदर्थांतरवृत्तयः कारणवाक्यस्थाश्शिवादिशब्दास्स्वार्थाद्रुद्रात्प्रच्याव्य नारायणे व्यवस्थाप्यन्ते, अतः कारणवाक्यस्थानां शिवादिशब्दानां नरुद्राख्यदेवताविशेषसमर्पकतासंभवः, एतद्व्यंजनायैव प्रकृतश्लोके "तत्वमेकोमहायोगीहरिर्नारायण"इति नारायणपदोपादानं, हरिपदेनैव देवताविशेषलाभेन नारायणपदोपादानस्य प्रयोजनान्तरानुपलंभात्, एवं कारणवाक्यस्थानां शिवादिशब्दानां रुद्रपरत्वांगीकारे कारणवाक्यस्थस्य नारायणपदस्य तत्रलक्षणाकल्पनप्रसंगः। प्रकारांतरेण तत्र वृत्त्यसंभवस्योपपादितत्वात्। तेषां नारायणपरत्वांगीकारेतु नक्कापिलक्षणाप्रसंगः, अतोविनैव लक्षणां सर्वकारणवाक्यनिर्वाहानुरोधेन तेषां नारायणपरत्वांगीकारएवन्याय्यइत्यतोऽपि तेषां नरुद्रसमपकतासंभवः, एवं हेतुभिस्सर्वतोमुखैरित्यत्र विवक्षितेषु हेतुषु दिङ्मात्रंप्रदर्शितं विस्तरस्त्वन्यत्रद्रष्टव्यः। अस्मिन्श्लोके तत्वंजिज्ञासमानानामित्यनेन "अथातोब्रह्मजिज्ञासे"ति सूत्रस्थब्रह्मजिज्ञासापद-

स्यार्थतश्शब्दतश्च प्रत्यभिज्ञानेन हेतुभिस्सर्वतोमुखैरित्यनेन "ईक्षतेर्नाशब्द"मित्यारभ्य एतेन सर्वेव्याख्याताइत्यंतशारीरकसूत्रोक्तन्यायकलापस्य प्रत्यभिज्ञानेनच शारीरकमीमांसासमन्वयाध्यायसिद्धान्तितोऽर्थोऽनेनश्लोकेनसंग्रहेण प्रदर्शितइति स्फुटं प्रतीयते । तथा नारायणएव सर्वासु परविद्यासूपास्यइति महाभारते निर्णयादपि तत्र तस्यैव परतत्वभूततानिर्णयस्सिद्धः, परविद्योपास्यत्वस्य कारणत्वव्याप्यतया तन्निर्णये कारणत्वस्य निर्णीततासिद्धेः, कारणस्यैव परतत्त्वपदार्थत्वात् ॥

तथाहि—महाभारतेऽनुशासनपर्वणि सर्वशास्त्रसारनिर्णयाध्याये श्लोकः "आलोडयसर्वशास्त्राणिविचार्यचपुनःपुनः, इदमेकं सुनिष्पन्नंध्येयोनारायणस्सदा" इति' सर्वशास्त्राण्यालोडय पर्यालोच्य पुनःपुनर्विचार्य नारायणोध्येय इतीदमेकं सुनिष्पन्नमिति श्लोकार्थः, न्यायानुगृहीतवेदान्तवाक्यैर्नारायणस्यैव सर्वपरविद्योपास्यत्वं दुष्प्रकंपं सिद्धमित्युक्तं भवति अत्र पुनःपुनर्विचार्येत्यनेन ईक्षतेर्नाशब्दमित्यादिना तत्तदधिकरणेषु प्रवर्तितोविचारः प्रत्यभिज्ञाप्यते, उत्तरार्धेन विचारफलं प्रदर्शितं । विचारफलभूतनिर्णयस्याविचाल्यत्वं द्योतयता सुनिष्पन्नमित्यत्र सूपसर्गेण तस्य विचाल्यत्वशंकातत्परिहार योर्विवक्षितत्वं गम्यते तत्रेयमाशंका विवक्षिता—अथर्वशिखायां कश्च ध्येयइति सामान्यतोध्येयप्रश्नस्य शंभुर्ध्येयइत्युत्तरदर्शनाच्छिवस्यैव सर्वपरविद्योपास्यत्वप्रतीतेर्नोक्तनिर्णयस्साधीयान्, तथाहि, अथर्वशिखायांश्रूयते भगवन् किमादौप्रयुक्तं ध्यानं ध्यायितव्यं किंतत्ध्यानं कोवाध्याता कश्चध्येयः सएभ्योऽथर्वाप्रत्यु-

वाच ओमित्येदतक्षरमादौप्रयुक्तंध्यानं ध्यायितमम्; सर्वकरणानि मनसि संप्रतिष्ठाप्यध्यानं विष्णुः प्राणं मनसि सहकरणैस्संप्रतिष्ठाप्य ध्याता रुद्रः प्राणं मनसि सहकरणैर्नादान्ते परमात्मनि संप्रतिष्ठाप्य ध्यायीतेशानं प्रध्यायितव्यं सर्वमिदंब्रह्मविष्णुरुद्रेन्द्रास्तेसर्वे संप्रसूयंते सर्वाणिचेंद्रियाणि सहभूतैर्नकारणंकारणानां धाता ध्याता कारणंतुध्येयस्सर्वैश्वर्यसंपन्नस्सर्वेश्वरश्शंभुराकाशमध्येइत्यारभ्य शिवएकोध्येयश्शिवंकरस्सर्वमन्यत्परित्यज्येति । अत्र कश्च ध्येयइति चतुर्थप्रश्नस्य ध्यायीतेशानमित्यादिना उत्तरमभिधीयते । तत्रेशानमितिध्येयनिर्देशः, ताच्छल्यार्थकचानशंतेन योगरूढेन ईशानशब्देन स्वाभाविकनिरतिशयैश्वर्यवान्परमशिवोबोध्यते, प्रध्यायितव्यमिति तस्याधिक्येन ध्यानार्हत्वं दर्शितं, इतरेषामतादृशत्वज्ञापनाय सर्वमिदं ब्रह्मविष्णुरुद्रेंद्राइति सामानाधिकरण्येन ब्रह्मविष्ण्वादीनां चतुर्णां प्रपंचनिर्वाहकत्वेन प्रमुखतामभिधाय ते सर्वे संप्रसूयंत इत्यादिना सहभूतैरित्यंतेन भूतेंद्रियादितुल्यतया तेषामप्युत्पत्तिमुक्त्वा तेन तेषामैश्वर्यस्य परिच्छन्नतां स्फोरयित्वा न कारणं कारणानां धाता ध्यातेत्यनेन परमशिवस्योत्पत्यभावोक्त्या तदैश्वर्यस्यापरिच्छिन्नतता व्यंजिता । अत्र पूर्ववाक्यात्प्रसूयत इति वचनविपरिणामेनानुषज्यते. कारणपदेन ब्रह्मादीनां प्रसूतत्वोक्तिसामर्थ्यसिद्धं यत्तेषांकारणं तद्बोध्यते । सच पूर्वप्रकृतईशानएव । तस्यध्येयतांविधाय ब्रह्मादीनां ध्येयत्वव्यवच्छेदाय तेषामुत्पत्तिमत्वरूपदोषमुक्त्वा क्रियमाणस्योत्पत्तिनिषेधस्य ध्येयतयोक्ते ईशाने तद्दोषव्यावर्तनार्थतया तद्विषयतायाएवोचितत्वात्, ततश्चायमर्थः, कारणानां ब्रह्मादीनां धाता धारकः ध्याता सृष्टिसंकल्पक तां

कारणं ब्रह्मादीनां कारणभूतईशानः न प्रसूयते न कुतश्चिदुत्पद्यतइति कारणंतुध्येयइत्यादिना उपास्यस्थानं कथ्यते, सर्वैश्वर्यसंपन्नस्सर्वेश्वरनामा कारणभूतश्शंभुराकाशमध्ये परमाकाशरूपपरमशिवलोके ध्येयः तल्लोकवर्तितया ध्यातव्यइत्यर्थः, इत्थमुक्तिभंगीसिद्धं यत्सकलेतरपरित्यागपूर्वकं परमशिवस्य ध्येयत्वं तत् आदरातिशयेन कंठोक्त्यापि स्फुटयति शिवएकोध्येयइत्यादिना, ततश्चात्र शिवस्यैव सर्वपरविद्योपास्यत्वप्रतीतिस्स्फुटेति ॥

अयमत्रपरिहारोविवक्षितः—न्यायनिरूपणे क्रियमाणे नात्र नारायणादन्यस्य कस्यचित् ध्येयत्वविधानलाभः, तथाहि—कश्च ध्येयइति चतुर्थप्रश्नस्य ध्यायीतेशानमिति नेदमुत्तरं भवितुमर्हति, प्रश्नवैरूप्यात्, पूर्वप्रश्नानां सरूपस्यैवोत्तरस्य दर्शनात्, इहापि सति सरूपे उत्तरवाक्ये विरूपस्य तथात्वाश्रयणस्यायुक्तत्वाच्च, अपितु "कारणंतुध्येय" इतीदमेव तस्योत्तरं। तत्रच कारणमनूद्य तस्य ध्येयत्वं विधीयते, अनूद्यमानं कारणंच नारायणएव, पुरोवादेषु नारायणोपनिषदादिषु तस्यैव कारणत्वविधानात्। ईशानंप्रध्यायितव्यमित्यादिपूर्वसंदर्भस्तु तदुपोद्घातरूपः, । प्राणंमनसिसहकरणैर्नादान्ते परमात्मनि संप्रतिष्ठाप्य ध्यायीतेति तत्पूर्ववाक्यंतु पूर्वप्रस्तुतस्य ध्यातुर्विशेषणविधानपरं। ईशानंप्रध्यायितव्यमिति वाक्यांतरं, ईशानं सर्वेशितृवस्तु प्रध्यायितव्यं। तस्यैव मोक्षप्रदानसामर्थ्यादितिभावः। तदेव सर्वेश्वरत्वमुपपाद्यते सर्वमिदमित्यादिना। ब्रह्मरुद्रादीनां प्रपंचनिर्वाहकाणामपि कुतश्चित्प्रसूतत्वात्तेषामैश्वर्यस्य परिच्छिन्नत्वात् तेषामपि यतः प्रसूतिः तदेवा-

परिच्छिन्नैश्वर्यमितिभावः, तस्यापि कुतश्चित्प्रसूतत्वे सर्वेश्वरत्वं हीयेतेत्यतस्तस्य प्रसूतत्वाभावं दर्शयति—नकारणंकारणानामित्यादिना, अत्र प्रसूयतइति वचनविपरिणामेनानुषज्यते । ततश्च कारणानां ब्रह्मादीनां कारणमुत्पादयिता धाता धारयिता ध्याता सृष्टिसंकल्पकर्ता नप्रसूयतइत्यर्थः, । अतस्सर्वेश्वरस्यैव मोक्षप्रदानसामर्थ्यात्परमकारणस्यैव सर्वेश्वरत्वात्तदेव परमकारणं मुमुक्षुभिर्ध्येयमित्याशयेनाह-कारणंतुध्येयइति । इत्थंच कारणानुवादेन ध्येयत्वविधायकेऽस्मिन्वाक्ये कारणपदस्य नारायणोपनिषदादिप्राप्तनारायणात्मककारणपरतया तथाविधकारणपदसमानाधिकरणशंभ्वादिपदानां नारायणेतरदेवतापरत्वस्य कथंचिदप्यसंभवेन प्राकरणिकेशानशंभ्वादिपदानि नारायणएव वर्तयितव्यानि । नच प्रकृतकारणपदं न नारायणोपनिषदादिप्राप्तकारणानुवादकं, अपितु ते सर्वे संप्रसूयंते इति प्राकरणिकवाक्ये ब्रह्मविष्ण्वादिप्रसूतिविधानसामर्थ्यसिद्धकारणानुवादकं, ततश्च प्रकृतेशानशंभ्वादिपदानां शिवपरत्वे न किंचिद्बाधकमिति शंक्यं । सर्वमिदं ब्रह्मविष्णुरुद्रेंद्रास्ते सर्वे संप्रसूयंतइत्यादेर्ध्येयविधिवाक्यशेषतया तस्य स्वातंत्र्येण किंचिदर्थविधायकत्वायोगात् । विधायकत्वांगीकारे वाक्यभेदप्रसंगात्, ततश्च वाक्यभेदप्रसंगपरिहारायानुवादत्वस्यैवाश्रयणीयतया "अथपुरुषोहवैनारायणोऽकामयतप्रजास्सृजेयेतिनारायणात्प्राणोजायते मनस्सर्वेंद्रियाणिच खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी, नारायणाद्ब्रह्माजायते, नारायणाद्रुद्रोजायते नारायणादिंद्रोजायते, अजायमानोबहुधाविजायत" इति श्रुत्यंतरासिद्धा ब्रह्मविष्ण्वादीनामुत्पत्तिरत्र

तेसर्वेसंप्रसूयंते इत्यादिना सहभूतैरित्यंतेनानूद्यतइति, नकारणंकारणानामित्यत्र कारणानां कारणमित्यनेन नारायणाद्ब्रह्मा जायतइत्याद्युक्तिसिद्धं ब्रह्मादीनां कारणानां कारणत्वं धातेत्यनेन नारायणात्प्रवर्तंतइत्युक्तिसिद्धं धारकत्वं ध्यातेत्यनेन नारायणोऽकामयतेत्युक्तिसिद्धं सृष्टिसंकल्पकर्तृत्वं चोपस्थाप्य तथाविधस्य नारायणस्य अजायमानइतिश्रुतिसिद्धोलोकप्रसिद्धजन्माभावोनप्रसूयतइत्यनेनानूद्यतइतिचास्थेयं। यद्यपि मोक्षप्रदत्वौपयिकसर्वेश्वरत्वोपपादकतया ब्रह्मादीनां नारायणात्प्रसूतत्वानुवादस्स फलः, नतुविष्णूत्पत्यनुवादः, तस्य सर्वेश्वरत्वोपपादकताविरहात्, तथापि विधित्सितध्येयत्वौपायिकसौलभ्यसौशील्यपरमकारुणिकत्वादिगुणपौष्कल्याविष्करणाय तथाविधगुणपौष्कल्यनिबंधनावतारानुवादस्स इतितत्साफल्यमवसेयं इत्थंच कारणंतु ध्येयइत्यत्र कारणपदस्य नारायणोपनिषदुक्तकारणानुवादकतया तत्प्रकरणस्थानामीशानशंभ्वादिशब्दानामर्थांतरपरत्वं नशक्यशंकमितीशानं प्रध्यायितव्यमित्यादेर्यथोक्तएवार्थोन्याय्यः। यद्यपीशानं प्रध्यायितव्यमित्युपोद्घाते सर्वेश्वरत्वविवक्षया ईशानः प्रध्यायितव्यइत्यपि निर्देशस्संभवति तथापि पुंलिंगेनेशानशब्देनोपक्रमे तस्य देवतांतरवाचित्वस्यापि संभवेन तत्परत्वभ्रमस्स्यात्, समाभूदिति तदर्थं नपुंसकेनेशानशब्देनोपक्रमः कृतः इति। एवमन्येपि परिहारप्रकाराद्रष्टव्याः। एवमुदाहृतेन श्लोकद्वयेन नारायणएव जगत्कारणभूतपरतत्वमित्येवंरूपे शारीरकमीमांसासमन्वयाध्यायसिद्धान्ते महाभारतसंवादः प्रदर्शितः, जगच्छरीरकोनारायणएव जगदुपादानकारणमिति व्याससिद्धान्तइति महा-

भारतेप्रतिपादनादपि सएव शारीरकमीमांसासिद्धान्त इति सुस्पष्टमवगम्यते । महाभारते हि मोक्षधर्मपर्वणि षष्ट्यधिकत्रिशततमाध्याये एवंप्रत्यपादि—किमात्मैक्यं तात्विकं किंवा आत्मबहुत्वं यदा आत्मबहुत्वं तात्विकं तदाऽऽत्मनांमध्ये कश्श्रेष्ठः उपादानकारणभूतश्चेति जनमेजयेन पृष्टोवैशंपायनः कापिलानां हैरण्यगर्भाणांचात्मबहुत्वमभिमतं, उभयेप्येते प्रधानभूतं कंचित्पुरुषं नेच्छंति, बहूनां पुरुषाणामेकयोनित्वेनोच्यमानं पुरुषमाख्यास्यामीति प्रतिज्ञाय वक्ष्यमाणार्थे पुरुषसूक्तं प्रमाणमिति सूचयित्वा कपिलादिभिरध्यात्मशास्त्रप्रवर्तकैर्यथायथमुक्तं, व्यासेनतुपुरुषैकात्म्यमभिहितं । तदेतत्तुभ्यं प्रवक्ष्यामीत्युक्त्वा तद्विषयं ब्रह्मरुद्रसंवादमवतार्य वैजयंताख्ये गिरौ ध्यानयोगमास्थितो ब्रह्मा यदृच्छया तत्रागतेन रुद्रेण एकाग्रेण मनसा त्वया चिंत्यमानः पुरुषः कइत्यनुयुक्तस्सन्मच्चिचालंबनमेकस्य पुरुषस्य स्वरूपं वक्ष्यामीत्युपक्रम्य बहूनां पुरुषाणां सएकायोनिरुच्यते एषपुरुषोवृद्धिक्षयादिविकाररहितस्सर्वव्याप्तस्त्वयामयाऽन्यैर्वा द्रष्टुमशक्यः, सर्वेषु शरीरेष्वसौ वसति अथापि कर्मभिर्न स्पृश्यते मम तवान्येषांच देहिनामसावंतरात्मा विश्वतोमूर्धादिमान् क्षेत्रसंज्ञितानां शरीराणां तद्बीजभूतानां शुभाशुभकर्मणांच वेदितृत्वादयं क्षेत्रज्ञइति व्यवह्रियते । तस्य गत्यागती दुर्विज्ञेये तस्यैकस्य महत्त्वं पुरुषत्वंच अतस्सएकोमहापुरुषसंज्ञां बिभर्ति असावेकः पुरुषोविश्वरूपः, एवंविधं परमात्मानमौपनिषदाइच्छन्ति, अन्येतु सांख्यादयः प्रत्यगात्मानमिच्छन्ति तयोः परमात्मा सर्वदैवसत्वादिगुणत्रयवर्जितः कर्मफलैश्च न श्लिष्यते सपरमात्मा

नारायणः, सएवहि सर्वात्मा पुरुषः, अन्यस्त्वात्मा कर्मवश्यत्वाद्बध्यते मुच्यतेच। प्राकृतशरीरेण च संसृज्यते, एवं बहुविधः पुरुषस्तुभ्यमुक्तः, सएषपुरुषोब्रह्मादीन्सृजति वासुदेवादिरूपेण चतुर्धाऽऽत्मानंविभज्य यथेच्छं क्रीडतीत्युक्तवानिति जनमेजयं प्रत्युवाचेति । अत्र वहूनां पुरुषाणा मेकयोनित्वोच्यमानं पुरुषमाख्यास्यामीति वैशंपायनप्रतिवचने पर्यालोच्यमाने वचनभंगीस्वारस्यादुत्तरत्र एकस्य पुरुषस्य श्रैष्ठ्यपर्यवासितमहत्त्वप्रतिपादनात्पुरुषबहुत्वस्य निगमनाच्च जनमेजयकृतयोः प्रश्नयो र्द्वितीयस्य बहुष्वात्मसु कश्श्रेष्ठः कोवा योनिरिति प्रश्नस्य प्रतिवचनमिदमिति स्फुटं प्रतीयते । ततश्च द्वितीयप्रश्नस्यात्मबहुत्वपक्षीयतया तत्प्रतिवचनभूतः कृत्स्नोपि संदर्भआत्मबहुत्वविषयएवेति निश्चीयते । इत्थंच तदंतर्गतं व्यासोक्ततयोच्यमानं पुरुषैकात्म्यं नात्मैक्यरूपं; परिगृहीतपक्षविरोधात् । अपितु पुरुषाणामेकेनात्मना विशिष्टत्वं; एकः आत्मा एषां ते एकात्मानः तेषां भावऐकात्म्यं पुरुषाणामैकात्म्यं पुरुषैकात्म्यं इति व्युत्पत्त्या उक्तार्थलाभात् । ततश्च पुरुषाणां योनिभूतमात्मानमभिधास्यामीति प्रतिज्ञायेदृशपुरुषैकात्म्यकथनात्सर्वेषामात्मभूतः पुरुषोयोनिरित्युक्तं भवति। योनित्वंचात्रोपादानत्वं एतेन जगच्छरीरकः परमात्मा जगदुपादानकारणमिति फलितं। तदेतदस्मिन्विषये उदाहृतेन ब्रह्मरुद्रसंवादरूपेणेतिहासेन विशदमवगम्यते । तत्रहि ब्रह्मणा बहूनां पुरुषाणां सयोनिरुच्यतइत्यनेन स्वेन चिंत्यमानस्य पुरुषस्य जगदुपादानतामभिधाय तस्य निर्विकारत्वकथनेन स्वरूपेणोपादानत्वानुपपत्तिं स्फोरयित्वा सर्वव्याप्तत्वकीर्तनेन तस्य नियमनार्थांव्याप्तिं सर्वेषामं-

तरात्मत्वोक्त्या उपादानतानिर्वाहकं नियमनार्थव्याप्तिकृतं जगतस्तस्यच शरीरात्मभावसंबंधं विश्वमूर्धत्वाद्युपवर्णनेन जगदुपादानत्वानुगुणज्ञानशक्त्यादिपौष्कल्यं तत्तत्क्षेत्रहेतु- भूतशुभाशुभकर्मवेदितृत्वोक्त्या देवादिविचित्रसृष्टिहेतुंचावि ष्कृत्य सएव देवमनुष्यादिविश्वरूपेणावस्थित इत्युक्त्या जगच्छ- रीरकस्सएव कारणं कार्यंचेति स्फुटीकृतं । एवमुदाहृतब्रह्मरुद्र- संवादे जगदुपादानभूतं परमात्मानं केचिदिच्छंति; अन्ये प्रत्य- गात्मानमित्युक्त्वा परमात्मप्रत्यगात्मनोरकर्मवश्यत्वकर्मवश्य- त्वरूपवैधर्म्योक्त्या तयोस्स्वरूपभेदं परमात्मनोविश्वमूर्धत्वम- हापुरुषत्वादिकथनेन सर्ववेदसारभूतपुरुषसूक्तप्रतिपन्नत्वेन तस्य दुरपह्नवतां देवताविशेषरूपतां चतुर्मुखादीनां तत्सृ- ष्टतांचोपदिश्य चतुर्धा व्यूह्य स्वेच्छाविहारवर्णनेन जगद्व्यापा- रस्य लीलारूपत्वं दर्शितं; अतोऽपि व्यासोपदिष्टत्वेनोक्तं पुरुषै- कात्म्यं नात्मैक्यरूपं । अपितु पूर्वोक्तरूपमेवेति स्पष्टमव- गम्यते । तद्विषयतयोदाहृते दर्शितब्रह्मरुद्रसंवादे जीवात्मपरमा- त्मनोर्बहुविधवैधर्म्यप्रतिपादनात् । जगद्व्यापारस्य क्रीडारूपत्व- कथनेन भ्रांतिकल्पितभेदानुवादइत्युक्तेरयोगात् । नहि भ्रांत- व्यापारस्य क्रीडारूपत्वमुपपद्यते । तदेवं जगच्छरीरकोनाराय- णएव जगदुपादानकारणमिति व्याससिद्धान्तइत्ययमर्थोमहा- भारते प्रतिपादितइति सिद्धम् ॥

अत्रच । "उत्सर्गेणापवादेन ऋषिभिःकपिलादिभिः । अध्यात्मचिन्तामाश्रित्यशास्त्राण्युक्तानिभारते"त्युक्त्वा "समा- सेनतुयद्व्यासः पुरुषैकात्म्यमुक्तवा"नित्यभिधानात्कपिलादिभि- रात्मबहुत्वविषयं शास्त्रमिव व्यासेनाप्युक्तविधासिद्धान्तविषयं

किंचिच्छास्त्रं प्रणीतामिति विज्ञायते । तेनचशास्त्रेण ब्रह्ममीमांसाशास्त्रेणैव भवितव्यम् । अन्यस्य तत्प्रणीतस्य तद्विषयशास्त्रस्यानुपलंभात् । अतोब्रह्ममीमांसाशास्त्रस्यैवायंसिद्धांतइत्यकामेनाप्येष्टव्यम् । तदेवं श्रियःपतिर्नारायणःपरतत्वमित्यस्मिन्नंशे महाभारतसंवादोदर्शितः । इदानीमप्राकृतदेशविशेषावस्थिततत्प्राप्तिपूर्वकतत्सायुज्यप्राप्तिरेव मोक्षपुरुषार्थइत्यत्र तत्संवादः प्रदर्श्यते । ब्रह्मविद्याफलं परमात्माधिष्ठितस्थानविशेषप्राप्तिः । तच्चस्थान मप्राकृतं नित्यं सकलेतरविलक्षणं परमात्मासाधारणंच तदारोहः प्रकृतिमंडलातिक्रमणानंतरभावी; तच्चमार्गविशेषाधिगम्यं तत्स्थानस्थितवासुदेवप्राप्त्यनंतरभाविनी मुक्तिः । मुक्तश्च तत्साधर्म्यं प्राप्नोति । आनंदविशेषमनुभवति । नचपुनरावर्ततइतिमहाभारतनिर्णयः । तथाहि-मोक्षधर्मपर्वणि शुकानुप्रश्ने षट्चत्वारिंशदधिक द्विशततमाध्याये शुकंप्रति व्यासवचनं । "विद्ययातदवाप्नोतियत्रगत्वानशोचति । यत्रगत्वानम्रियतेयत्रगत्वानजीर्यते नपुनर्जायतेयत्र । यत्रगत्वानवर्धते । यत्र तद्ब्रह्मपरममव्यक्तमचलंध्रुवं । अव्याकृतमनायासममृतंचाावियोगिच । द्वंद्वैर्यत्रनबाध्यंतेमानसेनचकर्मणा । समास्सर्वत्रमैत्राश्च सर्वभूतहितेरताः" इति अत्रपरमात्माधिष्ठितस्थानविशेषप्राप्तिर्विद्याफलमितिस्पष्टं । तस्य स्थानस्याप्राकृतत्वादिकमुक्तं तत्रैव मोक्षधर्मपर्वाणि जापकोपाख्याने षण्णवत्याधिकशततमाध्याये । तथाचतत्र युधिष्ठिरंप्रति भीष्मवचनं "अमूनियानिस्थानानि देवानाममलात्मनां । नानासंस्थानवर्णानि नानारूपफलानिच । दिव्यानिकामचारीणिविमानानिसभास्तथा । आक्रीडाविविधाराजन् पद्मिन्यश्चामलोदकाः । चतुर्णांलोकपालानांशुक्रस्याथबृ-

स्पतेः" । इत्युपक्रम्य "एतेवैनिरायास्तातस्थानस्यपरमात्मनः । अभयंचानिमित्तंचनतत्क्लेशसमावृतं । द्वाभ्यांमुक्तंत्रिभिर्मुक्तमष्टाभिस्त्रिभिरेवच । चतुर्लक्षणवर्जंतच्चतुष्कारणवर्जितं । अप्रहर्षमनानंदमशोकंविगतक्लमं । कालंसपचतेतत्रनकालस्तत्रवैप्रभुः । सकालस्यप्रभूराजन् स्वर्गस्याऽपि तथेश्वरः । आत्माकेवलतांप्राप्तस्तत्रगत्वानशोचति । ईदृशंपरमंस्थानं निरयास्तेचतादृशाः" । इति अत्रत्रिभिर्मुक्तमित्यनेन गुणत्रयवर्जितत्वकथनादप्राकृतत्वंनकालस्तत्रवैप्रभुरित्यनेन कालकृतपरिणामाद्यभावाभिधानान्नित्यत्वं एतेवैनिरयास्तातस्थानस्य परमात्मनइत्यनेनातिरमणीयभोग्यभोगोपकरण भोगस्थानसमृद्धानां लोकपालादिस्थानानामपि तदपेक्षया निरयत्वोक्त्या अभयत्वाद्युक्त्याच सकलेतरविलक्षणत्वं "आत्माकेवलतांप्राप्तस्तत्रगत्वानशोचतीत्यनेन मुक्तिस्थानत्वंचोक्तं" तदारोहस्य प्रकृतिमण्डलातिक्रमणानंतरभावित्वमुक्तं तस्मिन्नेव मोक्षधर्मपर्वणि सप्ताधिकत्रिशततमाध्याये 'प्रकृतिंचाप्यतिक्रम्यगच्छत्यात्मानमव्ययं । परंनारायणात्मानं निर्द्वंद्वंप्रकृतेः परम् । विमुक्तः पुण्यपापेभ्यः प्रविष्टस्तमनामयं । परमात्मानमगुणं ननिवर्तति भारत ।" इति अत्र प्रकृतिमतिक्रम्य प्रकृतेः परं परमात्मानं गच्छतीत्युक्त्या आदित्यवर्णंतमसस्तुपारे; आदित्यवर्णंतमसः परस्तात; क्षयंतमस्यरजसः पराके; इत्याद्युक्तरीत्या परमात्मनः प्रकृतिमण्डलस्य परस्ताद्वर्तमानत्वेन प्रकृतिमण्डलमतिक्रम्य तं गच्छतीत्यर्थलाभात्परमात्माधिष्ठितस्थानारोहणस्य प्रकृतिमण्डलातिक्रमणानंतरभावित्वं स्फुटं । तदधिगमे मार्गविशेषस्तत्रैव मोक्षधर्मपर्वणि सप्ताधिकत्रिशततमाध्याये दर्शितः

"तरंतियतयस्सिद्धाज्ञानयोगेनभारत । तेतीर्त्वादुस्तरं जन्मविशंतिविमलंनभः । ततस्तान्सुकृतीन्सर्वान्सूर्योवहतिरश्मिभिः । पद्मतंतुवदाविश्यप्रवहन्विषयान्नृप । तत्रतान्प्रवहोवायुः प्रतिगृह्णातिभारत । वीतरागान्यतीन्सिद्धान्वीर्ययुक्तांस्तपोधनान् । सूक्ष्मश्शीतस्सुगंधिश्चसुखस्पर्शश्चभारत । सप्तानांमरुतांश्रेष्ठोलोकान्गच्छतियश्शुभान् । सतान्वहति कौंतेयनभसः परमांगतिं । नभोवहतिलोकेशरजसः परमांगतिं ॥ रजोवहतिराजेन्द्रसत्वस्यपरमां गतिं । सत्वंवहतिशुद्धात्मापरंनारायणंप्रभुं । प्रभुर्वहतिशुद्धात्मापरमात्मानमात्मना । परमात्मानमासाद्यतद्भूतायतयोऽमलाः । अमृतत्वायकल्पन्तेननिवर्तंतिचाभिभो । परमासागतिः पार्थनिर्द्वंद्वानांमहात्मनां ।" इति अत्र भक्तियोगेन देहं विहाय परमपदं गच्छतोविदुषः प्रथमं सूर्यप्राप्तिमनंतरं वायुप्राप्तिमनंतरं मनस्तत्वाधिष्ठातुः प्रद्युम्नस्य प्राप्तिमनंतरं तमश्शब्दवाच्यप्रकृत्याधिष्ठातुर्महदादिसर्गकर्तुरनिरुद्धस्य प्राप्तिं तदनंतरं प्रवृत्तिशक्तियुक्ततया रजश्शब्दनिर्दिष्टजीवाधिष्ठातुस्संकर्षणस्य प्राप्तिं तदनंतरं शुद्धसत्वाधिष्ठातुर्व्यूहवासुदेवस्य प्राप्तिमनंतरं परवासुदेवस्य प्राप्तिंचाभिधाय तत् प्राप्त्याऽमृताभूत्वा पुनर्नावर्ततइत्यभिधीयत इत्यभियुक्तैर्व्याख्याततया तदनुगुणेन पाठेन भवितव्यमिति निश्चीयते । मोक्षधर्मपर्वणि नारायणीये चतुःपंचाशदधिकत्रिशततमाध्यायेत्वित्थमभिहितं "येतुदग्धेंधनालोके पुण्य पापविवर्जिताः । तेषांवैक्षेममध्वानंगच्छतांद्विजसत्तम । सर्वलोकतमोहन्ता आदित्योद्वारमुच्यते ।आदित्यदग्धसर्वांगा अदृश्याः केनचित्क्वचित् । परमाणुभूताभूत्वातु तदेवं प्रविशंत्युत । तस्मादपिवि-

निर्मुक्ता अनिरुद्धतनौस्थिताः । मनोभूतास्ततोभूत्वाप्रद्युम्नं प्रविशंत्युत । प्रद्युम्नाच्चापिनिर्मुक्ताजीवं संकर्षणं ततः । विशंति विप्रप्रवरास्सांख्याभागवतैस्सह । तत स्त्रैगुण्यहीना स्ते परमात्मानमंजसा । प्रविशंतिद्विजश्रेष्ठाः क्षेत्रज्ञंनिर्गुणात्मकं । सर्वावासंवासुदेवंक्षेत्रज्ञंविद्धितत्वतः । समाहितमनस्काश्चानियतास्संयतेंद्रियाः । एकांतभावोपगतावासुदेवंविशंतिते ।" इति अत्रविधूतपुण्यपापानां मोक्षमार्गमास्थितानां विदुषां प्रथममादित्यमण्डलस्य ततोऽनिरुद्धस्य ततोमनस्तत्वाधिष्ठातुः प्रद्युम्नस्य ततोजीवाधिष्ठातुस्संकर्षणस्य ततोवासुदेवस्य प्राप्तिरुक्ता । मुक्तेर्वासुदेवप्राप्त्यनंतरभावित्वमुक्तं मोक्षधर्मपर्वणि नारायणीये सप्तचत्वारिंशदधिकत्रिशततमाध्याये । "यं प्रविश्यभवन्तीहमुक्तावैद्विजसत्तमाः सवासुदेवोविज्ञेयः परमात्मासनातनः ॥" इति अत्रयं प्रविश्य मुक्ताभवन्तीत्युक्त्या यच्छब्दनिर्दिष्टवासुदेवप्राप्त्यनंतरभावित्वं मुक्ते स्स्पष्टं । मुक्तश्च वासुदेवसाधर्म्यं प्राप्नोतीति मोक्षधर्मपर्वणि वसिष्ठकराळजनकसंवादे त्रयोदशाधिकत्रिशततमाध्यायेऽभिहितं । "एवमेषप्रमुच्येतनान्यथेतिविनिश्चयः । परेण परधर्माच भवत्येषसमेत्यवै ॥ विशुद्धधर्माशुद्धेनबुद्धेनचसबुद्धिमान् । विमुक्तधर्मामुक्तेन समेत्यपुरुषर्षभ । वियोगधर्मणाचैव वियोगात्माभवत्यपि । विमोक्षिणाविमोक्षीचसमेत्येहतथाभवेत् । शुचिकर्मणाशुचिश्चैव भवत्यमितदीप्तिमान् । विमलात्माचभवतिसमेत्यविमलेनवै । केवलात्मातथाचैवकेवलेनसमेत्यवै । स्वतंत्रश्चस्वतंत्रेणस्वतंत्रत्वमवाप्नुयात् ।" इति । अत्रपरेणपरधर्माचभवत्येषसमेत्यवै, इत्यनेन एषउपासकः परेण ब्रह्मणा समेत्य समागम्य परधर्मा परस्ये-

वधर्मोयस्यसः परधर्मा परब्रह्मसमानधर्मवान्भवतीति सामान्यतः परब्रह्मसाधर्म्यप्राप्तिमभिधाय विशिष्य अविद्यारहितत्वसर्वसाक्षात्कर्तृत्वसंसारबंधरहितत्व दुःखवियुक्तत्व महानंदवत्त्वाकर्ममूलव्यापारवत्त्वसत्त्वादिगुणरहितत्वप्राकृतदेहेंद्रियादिसंबंधवर्जितत्वाकर्मवश्यत्वैः परमात्मसाधर्म्यप्राप्तिरभिहिता । अत्रविशुद्धधर्माशुद्धेनेत्यादौशुद्धादिपदंनित्यशुद्धादिपरं यथा सिद्धेशब्दार्थसंबंधे इत्यत्रसिद्धपदं नित्यसिद्धपरं तद्वत्; ततश्चात्रोपात्तयोर्द्वयोरेकोनित्यशुद्ध्यादिमान् अपरश्च स्थानविशेषावस्थिततत्प्राप्त्यधीनशुध्यादिमत्तयाऽगंतुकशुध्यादिमानित्युक्तंभवति । विमोक्षिणाविमोक्षीत्यत्रविमोक्षशब्दौ महानन्दार्थकौ; मुक्तिर्मोक्षोमहानंदइत्यनुशासनात् । ततश्च महानंदवत्त्वेन साधर्म्यलाभोद्रष्टव्यः । अनेन चोपासकस्य परब्रह्मसाधर्म्यप्रपंचनेन पूर्वाध्याये संसारनिर्विण्णस्य मनोरथविषयतयाऽभिहित साम्यशब्दार्थोविवृतोभवति । तत्रहि "यदातुगुणजालं तत्प्राकृतंवैजुगुप्सते । पश्यतेच परंपश्यं तदापश्यं न संत्यजेत्" इत्युपक्रम्य अनयाऽहंवशीभूतः कालमेतन्नबुद्धवान् । उच्चमध्यमनीचांतांतामहं कथमावसे इत्यादिना निर्वेदप्रकारमभिधाय, "अपेत्याहामिमांहित्वा संश्रयिष्येनिरामयं, अनेन साम्यं यास्यामि नानयाऽहमचेतसा, क्षमं मम सहानेन नैकत्वमनया सह ।" इत्युक्तं अनया प्रकृत्यावशीभूतो वशीकृतस्सन्नहं एतं कालं नबुद्धवान्, एतावान्कालो व्यर्थमेवगत इति न ज्ञातवान् । उच्चमध्यमनीचांतांदेवमनुष्यादिशरीरभेदेनोच्चममध्यमादिरूपेणावस्थितप्रदेशां तां प्रकृतिं कथमावसे आश्रित्यस्थास्यामि । इमां प्रकृतिं हित्वा परित्यज्य अपेत्य दूरं-

गत्वा निरामयं हेयप्रत्यनीकं परमात्मानं संश्रयिष्ये, अनेन परमात्मना साम्यं साधर्म्यं यास्यामि अचेतसा जडयाऽनया प्रकृत्यासाम्यं जडत्वं नयास्यामि अनेन परमात्मनैकत्वं साम्यं ममक्षमं युक्तं, अनया प्रकृत्या सममेकत्वं साम्यं न क्षममिति श्लोकार्थः । अत्र एकत्वमित्यस्य अत्यंतसाम्यमेवार्थो नतु स्वरूपैक्यं, पूर्वं तत्साम्यस्यैव प्रस्तुतत्वात्, उत्तराध्याये प्राक्प्रदर्शितरीत्या साधर्म्यप्रात्प्यभिधानेन साधर्म्य रूपमेवैकत्वमिह मनोरथविषय इति स्फुटीकृतत्वाच्च, एवंविधसाधर्म्यं प्राप्तस्य निरतिशयानंदानुभवः पुनरावृत्त्यभावश्च मोक्षधर्मपर्वणि वार्ष्णेयाध्यात्मे एकोनविंशत्यधिक द्विशततमाध्याये प्रतिपादितः, । भगवंतमजंदिव्यं विष्णुमव्यक्तसंज्ञितं । भावेन यांतिशुद्धा ये ज्ञानतृप्तानिराशिषः । ज्ञात्वात्मस्थं हरिंचैव न निवर्तंतितेऽव्ययाः । प्राप्यततपरमंस्थानं मोदन्तेक्षरमव्ययं' इति, अक्षरमव्ययं तत्परमं स्थानं प्राप्य मोदन्ते ननिवर्तंति इत्यन्वयः । अत्रमोदंत इति वर्तमानव्यपदेशेनानंदस्याविच्छेदस्सूचितः, अत्रमुक्तस्यानंदानुभवकंठोक्त्या विमोक्षिणाविमोक्षीचेति प्रागुदाहृतश्लोके विमोक्षशब्देनानंदो विवक्षितः इति निश्चीयते । वासुदेवं प्राप्तस्य पुनरावृत्त्यभावः प्राक्प्रदर्शितेषु बहुष्वध्यायेषु प्रतिपादितोद्रष्टव्यः, अत्र यंप्रविश्यभवंतीह मुक्तावैद्विजसत्तमाः । सवासुदेवोविज्ञेयःपरमात्मासनातनः इत्यत्र यं प्रविश्य मुक्ताभवंति सवासुदेव इत्यनेन मुक्ताभवंतीतिशब्दनिर्दिष्टस्वरूपाविर्भावपूर्वभाविप्राप्तिकर्मभूतं वस्तु वासुदेव इति ज्ञापनेन परंज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत इति श्रुतौ परंज्योति श्शब्दनिर्दिष्टो वासुदेव इति

ज्ञापितंभवति। तत्रहि परंज्योतिः स्वरूपाविर्भाव पूर्वं भाव्युपसंपत्त्यपराभिधानप्राप्तिकर्मतया निर्दिष्टं तदेवं विदुषश्शरीरादुत्क्रान्तस्य मार्गविशेषेण प्रकृतिमंडलोर्ध्वदेशवर्ति परमपदाख्यस्थानविशेषावस्थित वासुदेव प्राप्त्या स्वरूपाविर्भावरूपा मुक्तिर्भवति, मुक्तश्च वासुदेवेन समानानंदवत्त्वरूपसायुज्यं प्राप्य पुनर्नावर्ततइति शारीरकमीमांसाचतुर्थाध्यायोत्क्रांति पादादित्रिपाद्यर्थोऽत्रविवृतः, इयान्भेदः—शारीरकमीमांसायां विदुषोऽर्चिरादिना गतिरुक्ता, इहतु मार्गांतरेणेति, तदेवं श्रियः पतिर्नारायणः परं ब्रह्म; अप्राकृतदेशविशेषे तत्सायुज्यप्राप्तिरेव मोक्षपुरुषार्थइति महाभारते प्रतिपादितामिति सिद्धं ॥

यत्तु महाभारते वासुदेवावताररूपस्य कृष्णस्य शिवपूजनेन सकलवरलाभोक्त्या साक्षात्प्रतिपादितनिरतिशय प्रभावशालिनस्साक्षात्परं ब्रह्मेति संभाव्यमानात्ततोऽपि तत्पूज्यस्य यत्पारम्यं व्यंजनावृत्त्याप्रतीयते तदेव महाभारतस्य वाच्यनारायणचरितद्वारा व्यज्यमानं प्रधानप्रतिपाद्यं । महाभारतं हि महदुत्कृष्टं काव्यं । अस्यचोत्तमकाव्यस्य वाच्यातिशायि यद्व्यंग्यमस्ति तदेव प्रधानं, नतुवाच्यं; इहतुवाच्यः परब्रह्मत्वसंभावनावहोनारायणस्य निरतिशयमहिमा, तस्यापि पूज्यतया सर्वत्र निबद्धस्य शिवस्य तदतिशायिसगुणपरब्रह्मभावरूपोमहिमा व्यज्यमानः अयमेव वस्तुध्वनिरूपः। सहि तत्र व्यज्यमानै र्भावरसालङ्कारध्वनिभिरुपस्कृतः प्रबंधुराशयस्थउन्नीयत इति महाभारतसारसंग्रहस्तोत्रकृदुत्प्रेक्षणं, तदसत्; महाभारते नारायणस्यैव सर्वस्मात्परत्वस्यैदंपर्येण व्यवस्थापिततया तस्य शिवपारम्यप्रतिपादनपरतायाः कथंचिदपि दुर्वचत्वात् । महाभारतेहि

मोक्षधर्मपर्वाणि भगवतोनारायणस्य परब्रह्मतामुपक्रम्य तदेव पुनः पुनरभ्यस्य तस्मात्परंवस्तु निषिध्य तदुपासकस्यापुनरावृत्तिलक्षणमोक्षाख्यपरमफलावाप्तिमुक्त्वा तस्यैव परब्रह्मताया न्यायानुगृहीतवेदान्तवाक्यसिद्धत्वमभिधाय तदुपपादकतया तस्य ब्रह्मरुद्रादिसकलजगत्स्रष्टृत्वं ब्रह्मरुद्रादीनां तत्तदध्यक्षताप्रदत्वं ब्रह्मरुद्रादिभिरुपास्यत्वं तेषां जगत्पूज्यत्वजगदर्थितवरप्रदत्वादिवरदातृत्वं मुमुक्षुभिरुपास्यत्वं मुक्तप्राप्यत्वं सत्वोत्कर्षाधायकजायमानपुरुषविषयदृष्टिकत्वं ब्रह्मरुद्रादिभिर्दुर्दर्शत्वं ब्रह्मरुद्रादिसकलचेतनांतरात्मत्वं अकर्मवश्यत्वं सर्वश्रेष्ठत्वं अनितरसाधारण्येन महापुरुषशब्दवाच्यत्वं सांख्ययोगपाशुपतादिपंचासिद्धांतपर्यवसानभूमित्वमित्यादिकं नारायणस्य सर्वोत्कृष्टतासाधकमुपदिश्य ब्रह्मरुद्रयोस्तदादिष्टमार्गेण सृष्टिसंहारकर्तृत्वं तयोस्तत्र निमित्तमात्रत्वं मुमुक्षुभिरनुपास्यत्वं परिमितफलप्रदत्वं रजस्तमोभिभूतमनस्कत्वात्तज्जायमनपुरुषाविषयदृष्टिकत्वमित्यादिकं नारायणादपकृष्टतासाधकं चोक्त्वा उपसंहृतं । तथाहि-मोक्षधर्मपर्वणि मनुबृहस्पतिसंवादे चतुरधिकात्रिशततमाध्याये "पृथिवीरूपतोरूपमपामिहमहत्तरं । अद्भ्योमहत्तरंतेजस्तेजसःपवनोमहान् । पवनाच्चमहद्व्योमतस्मात्परतरं मनः । मनसो महतीबुद्धि बुंद्धेः कालोमहान् स्मृतः । कालाद्धिभगवान्विष्णुर्यस्य सर्वमिदं जगत् । नादिर्नमध्यं नैवांतस्तस्य देवस्य विद्यते । अनादित्वादमध्यत्वादनंतत्वाच्चसोऽव्ययः । तद्ब्रह्मपरमंप्रोक्तं तद्धामपरमंपदं । तद्गत्वाकालविषयाद्विमुक्तामोक्षमाश्रताः" । इति । तत्रैव दशाधिकद्विशततमेऽनुस्मृत्यध्याये, "श्रीवत्सांकं जगद्बीजमनंन्तंलोकसाक्षिणं । पुरानारायणंदेवं ना-

रदः पर्यपृच्छत, । अक्षरंपरमंब्रह्मानिर्गुणंतमसः परं" इति । तत्रैव द्वादशाधिकद्विशततमाध्याये गुरुशिष्यसंवादे—"यत्तदक्षरमव्यक्तममृतंब्रह्मशाश्वतं । वदंतिपुरुषव्याघ्रकेशवं पुरुषर्षभं" इति । तत्रैव नारायणीये एकोनपंचाशदाधिकत्रिशततमाध्याये "एवमेषमहाभागपद्मनाभस्सनातनः ।" इत्युपक्रम्य "एषवैतत्परंब्रह्म विज्ञेयोज्ञानचक्षुषा । एवमेतत्पुरादृष्टं मयावैज्ञानचक्षुषा" इत्येवमादिषु नारायणस्य परब्रह्मत्वमाम्रेडितं । तथा नारायणात्परंवस्तु नास्तीति चोक्तं नारायणीये सप्तचत्वारिंशदधिकत्रिशततमाध्याये—"अव्यक्तंपुरुषेब्रह्मन्निष्कळेसंप्रलीयते, नास्तितस्मात्परतरः पुरुषाद्वैसनातनात् । नित्यंहिनास्तिजगतिभूतं स्थावरजंगमं । ऋतेतमेकं पुरुषं वासुदेवं सनातनं" इति । तदुपासकस्य मोक्षाख्यपरमफलावाप्तिरुक्ता मोक्षधर्मपर्वाणि एकोनविंशत्यधिकद्विशततमाध्याये, "भगवन्तमजंदिव्यं विष्णुमव्यक्तसंज्ञितं । भावेनयांतिशुद्धाये ज्ञानतृप्तानिराशिषः । ज्ञात्वात्मस्थं हरिंचैव न निवर्तंतितेऽव्ययाः । प्राप्यतत्परमंस्थानं मोदंतेऽक्षरमव्ययं" इति । तथा शांतिपर्वणि नारायणीये पंचाशदधिकत्रिशततमाध्याये "चतुर्विधाममजनाभक्ता एव हिमेश्रुतं । तेषामेकांतिनश्श्रेष्ठास्तेचैवानन्यदेवताः । अहमेवगतिस्तेषांनिराशीःकर्मकारिणां । येतु शिष्टास्त्रयोभक्ताः फलकामाहितेमताः । सर्वेच्यवनधर्माणः प्रतिबुद्धस्तु मोक्षभाक्" इति । अत्रार्जुनं प्रति भगवद्वचने भगवद्भक्तेषु चतुर्विधेषु चतुर्थस्य प्रतिबुद्धशब्दानिर्दिष्टस्य ज्ञानिनोमोक्षफलावाप्तिस्स्पष्टा । नारायणस्यैव परतत्वरूपताया न्यायानुगृहीतवेदान्तवाक्यसिद्धत्वमाभिहितं मोक्षधर्मपर्वाणि सप्तपञ्चाशदधिकत्रिशततमाध्याये, "तत्वंजि

ज्ञासमानानां हेतुभिस्सर्वतोमुखैः । तत्वमेकोमहायोगीहरिर्नारायणः प्रभुरिति". तस्यैव परब्रह्मत्वोपपादनाय तस्य ब्रह्मरुद्रादिसकलजगत्स्रष्टृत्वमुक्तं नारायणीये पंचाशदधिकत्रिशततमाध्याये "नमोऽतियशसेतस्मैदेवानां परमात्मने । नारायणाय विश्वाय निर्गुणाय गुणात्मने । यस्यप्रसादजो ब्रह्मारुद्रश्चक्रोधसंभवः । यो सौ योनिर्हिसर्वस्य स्थावरस्य चरस्यच । अष्टादशगुणंयत्तत्सत्वंसत्ववतांवर । प्रकृतिस्सापरामह्यंरोदसीयोगधारिणी । ऋतासत्याऽमराऽजय्यालोकानामात्मसंज्ञिता । तस्मात्सर्वाः प्रवर्तंते सर्गप्रलयविक्रियाः । तपोयज्ञश्चयष्टाचपुराणपुरुषोविराट् । अनिरुद्धइतिप्रोक्तोलोकानां प्रभवाप्ययः । ब्राह्मेरात्रिक्षये प्राप्तेतस्य ह्यमिततेजसः । प्रसादात्प्रादुरभवत्पद्मं पद्मनिभेक्षण । ततोब्रह्मासमभवत्सतस्यैव प्रसादजः । अह्नः क्षयेललाटाच्च ततोदेवस्य वैतथा । क्रोधाविष्टस्य संजज्ञे रुद्रस्संहारकारकः" इत्यर्जुनं प्रति कृष्णवचने । तथातत्रैव सप्तपंचाशदधिकत्रिशततमाध्याये वैशंपायनवचनं "यत्किंचिदिहलोकेवैदेहबद्धंविशांपते । सर्वंपंचभिराविष्टं भूतैरीश्वरबुद्धिजैः । ईश्वरोहिजगत्स्रष्टाप्रभुर्नारायणोविराट् । भूतांतरात्मावरदस्सगुणोनिर्गुणोऽपि च । भूतप्रलयमत्यंतंशृणुष्वनृपसत्तम । धरण्यामथलीनायामप्सुचैकार्णवेपुरा । ज्योतिर्भूते जलेचापि लीनेज्योतिषि चानले । वायौ चाकाशसंलीने आकाशेचमनोऽनुगे । व्यक्तेमनसिसंलीने व्यक्तेचाव्यक्ततांगते । अव्यक्तेपुरुषंयाते पुंसिसर्वगतेऽपिच । तम एवाभवत्सर्वंनप्राज्ञायतकिंचन । तमसो ब्रह्मसंभूतं तमोमूलामृतात्मकं । तद्विश्वभावसंज्ञांतं पौरुषींतनुमाश्रितं । सोऽनिरुद्धइति प्रोक्तस्तत्प्रधानं प्रचक्षते । तदव्यक्तमि-

तिज्ञेयं त्रिगुणंनृपसत्तम । विद्यासहायवान्देवो विष्वक्सेनोहरिः प्रभुः । अप्स्वेवशयनं चक्रे निद्रायोगमुपागतः । जगतश्चिंतयन् सृष्टिंचित्रांबहुगुणोद्भवां । तस्यचिंतयतस्सृष्टिंमहानात्मगुणस्स्मृतः । अहंकारस्ततोजातो ब्रह्मासतुचतुर्मुखः । हिरण्यगर्भोभगवान्सर्वलोकपितामह" इत्यादि । अत्रब्रह्मादिसृष्टिकर्तृत्वं नारायणस्यस्पष्टमुक्तं । एवमन्यत्रापि जगत्स्रष्टृत्वाभिधानं द्रष्टव्यं । अनेन च जगत्स्रष्टृत्ववचनेन जगत्कारणत्वरूपब्रह्मलक्षणयोगोदर्शितः । ब्रह्मरुद्रादीनां तत्तदध्यक्षत्वप्रदत्वमुक्तं मोक्षधर्मपर्वणि षडधिकाद्विशततमाध्याये "ततः कृष्णोमहाभागः पुनरेवयुधिष्ठिर" इत्युपक्रम्य "सएवंचतुरोवर्णान् समुत्पाद्यमहातपाः । अध्यक्षंसर्वभूतानां धातारमकरोत्स्वयं । वेदविद्याविधातारं ब्रह्माणममितद्युतिं । भूतमातृगणाध्यक्षं विरूपाक्षंचसोऽसृजत् । शासितारं चपापानां पितॄणां समवर्तिनं । असृजत्सर्वभूतात्मानिधिपंचधनेश्वरं । यादसामसृजन्नाथं वरुणंच जलेश्वरं । वासवं सर्वदेवानामध्यक्षमकरोत्प्रभुः" इति । अत्रउपक्रमे, अध्यक्षंसर्वभूतानां धातारमकरोत्स्वयमिति, अंतेच, वासवंसर्वदेवानामध्यक्षमकरोत्प्रभुरितिच ब्रह्मवासवयोस्तत्र तत्राध्यक्षीकरणश्रवणान्मध्येऽप्यध्यक्षमसृजदित्यनेन तत्रतत्राध्यक्षीकरणमेव विवक्षितमिति निश्चीयते। नारायणस्य ब्रह्मरुद्रादिभिरुपास्यत्वमुक्तं नारायणीये पंचाशदधिकत्रिशततमाध्याये "सब्रह्मकास्सरुद्राश्च सेंद्रादेवास्सहर्षिभिः । अर्चयंतिसुरश्रेष्ठं देवं नारायणं हरिं । भविष्यतां वर्ततांचभूतानांचैवभारत । सर्वेषामग्रणीर्विष्णुस्सेव्यः पूज्यश्चनित्यशइति" अत्रसुरश्रेष्ठमिति सर्वेषामग्रणीरितिच विशेषण-

द्वयेन नारायणस्य ब्रह्मरुद्रादिभिस्सेव्यतायां सर्वापेक्षया श्रेष्ठत्वमेव निमित्तमिति व्यंजितं । ब्रह्मरुद्रादीनां जगत्पूज्यत्वजगदर्थितवरप्रदत्वादि वरदातृत्वमुक्तं तत्रैव सप्तपंचाशदधिक त्रिशततमाध्याये भगवद्वचने-"मयासृष्टःपुराब्रह्मा मांयज्ञमयजत्स्वयं । ततस्तस्मैवरान्प्रीतोदत्तवानस्म्यनुत्तमान् । मत्पुत्रत्वंचकल्पादौलोकाध्यक्षत्वमेवच । अहंकारकृतंचैवनामपर्यायवाचकं । त्वयाकृतांचमर्यादांनातिक्रंस्यतिकश्चन । त्वंचैववरदोब्रह्मन् वरेप्सूनांभविष्यसि । सुरासुरगणानां चऋषीणांचतपोधन । पितृणांचमहाभागसततंसंशितव्रत । विविधानांचभूतानांत्वमुपास्योभविष्यसि । प्रादुर्भावगतश्चाहंसुरकार्येषु नित्यदा । अनुशास्यस्त्वयाब्रह्मान्नियोज्यश्चसुतोयथा । एतांश्चान्यांश्चरुचिरान्ब्रह्मणेऽमिततेजसे । एवंरुद्रायमनवेइंद्रायामिततेजसे । अहंदत्वावरान्प्रीतोनिवृत्तिपरमोऽभवं" इति । तथा तत्रैव एकोनपंचाशदधिकात्रिशततमाध्याये देवान्प्रति भगवद्वचनं—"एषलोकगुरुर्ब्रह्माजगदादिकरः प्रभुः । एषमातापिताचैव युष्माकंचपितामहः । मयानुशिष्टोभवितासर्वभूतवरप्रदः । अस्यैव चानुजोरुद्रोललाटाद्यस्समुत्थितः । ब्रह्मानुशिष्टोभवितासर्वभूतवरप्रदः" इति । अत्रभगवदनुशासनेन ब्रह्मणस्सर्वभूतवरप्रदत्वं तदनुशिष्टब्रह्मानुशासनेन रुद्रस्य सर्वभूतवरप्रदत्वंच स्पष्टं । नारायणस्य मुमुक्षूपास्यत्वंतु नारायणीये श्वेतद्वीपवासिवृत्तांतादिषु प्रपंचितं । मुक्तप्राप्यत्वं प्रागुदाहृते मोक्षधर्मपर्वांतर्गतद्व्यधिकात्रिशततमाध्यायस्थे — परमासागतिः पार्थनिर्द्वंद्वानां महात्मानामिति वचने स्पष्टं । सत्वोत्कर्षाधायक जायमानपुरुषविषयदृष्टिकत्वमुक्तमष्टपंचाशदधिक त्रिश-

ततमाध्याये—"जायमानं हि पुरुषंयंपश्येन्मधुसूदनः । सात्विकस्सतुविज्ञेयोभवेन्मोक्षार्थचिंतकः" इति ब्रह्मरुद्रादिभिर्दुर्दर्शत्वं ब्रह्मरुद्रादिसकलचेतनांतरात्मत्वमकर्मवश्यत्वं सर्वश्रेष्ठत्वमनितरसाधारण्येन महापुरुषशब्दवाच्यत्वं चैकषष्ठ्यधिकत्रिशततमाध्याये, "नसशक्यस्त्वयाद्रष्टुंमयान्यैर्वाऽपिसत्तम । सगुणैर्निर्गुणैर्विश्वोज्ञानगम्योह्यसौस्मृतः । ममांतरात्मातवचयेचान्येदेहिसंज्ञिताः । सर्वेषांसाक्षिभूतोऽसौनग्राह्यः केनचित्कचित् । वसन्नपि शरीरेषु न सलिप्यतिकर्मभिः । तस्यैकस्य महत्त्वंहि सचैकः पुरुषस्स्मृतः । महापुरुषशब्दंसबिभर्त्येकस्सनातनः ।" इति रुद्रंप्रति चतुर्मुखोक्तौ स्पष्टं । सांख्ययोगपाशुपतादिपंचसिद्धांतपर्यवसानभूमित्वमेकोनषष्ठ्यधिकत्रिशततमाध्याये प्रतिपादितं; तत्रहि—सांख्ययोगपांचरात्रवेदपाशुपतरूपाणि शास्त्राण्येकतत्त्वप्रतिपादनपराणि भिन्नभिन्नतत्त्वप्रतिपादनपराणिवेति जनमेजयप्रश्नं प्रतिब्रुवता वैशंपायनेन वक्ष्यमाणार्थस्य स्वाचार्योपदिष्टपरमरहस्यत्वद्योतनाय स्वाचार्यभगवद्व्यासप्रणामपूर्वकं "सांख्यं योगः पांचरात्रं वेदाः पाशुपतं तथा । ज्ञानान्येतानिराजर्षेविद्धिनानामतानिवै" इत्युपक्रम्य "सर्वेषुचनृपश्रेष्ठज्ञानेष्वेतेषु दृश्यते । यथागमंयथा न्यायं निष्ठानारायणः प्रभुरित्युक्तमित्यभिहितं । प्रतिवचनश्लोकस्यचायमर्थः—सांख्ययोगादीनि शास्त्राणि तत्तच्छास्त्रप्रणेतृबुध्या भिन्नभिन्नतत्त्व प्रतिपादनपराण्येव; न्यायानुगृहीततत्तदागमपरामर्शेतु अपौरुषेयत्वेन नित्यनिर्दोषतया प्रबलतमासु "सर्वंखल्विदंब्रह्म" "विश्वमेवेदंपुरुषः" "नारायणएवेदंसर्व" मित्यादिश्रुतिषु सांख्यादितत्तदागमप्रतिपन्नानां

प्रधानपुरुषपशुपतीनां परब्रह्मभूतनारायणात्मकत्वप्रतिपादन-दर्शनात्कपिलहिरण्यगर्भपशुपातिप्रणीतत्वेन पौरुषेयतया दुर्बलेषु तत्तदागमेषु स्वतंत्रत्वेन प्रतिपादितानामपि तेषां नारायणात्मकतयैव वस्तुत्वमिति तत्तदागमानां तत्तत्प्रतिपाद्य-प्रधानाद्यात्मभूते नारायणएव पर्यवसानमिति पंचानामपि सिद्धांतानां नारायणएव पर्यवसानभूमिरिति । ब्रह्मरुद्रयोर्नारायणादिष्टमार्गेण सृष्टिसंहारकर्तृत्वं तयोस्तत्र निमित्तमात्रत्वंच नारायणीये पंचाशदधिकत्रिशततमाध्याये "ततो ब्रह्मासमभवत्सतस्यैव प्रसादजः । अह्नःक्षयेललाटाच्चसुतोदेवस्यवैतथा । क्रोधाविष्टस्यसंजज्ञेरुद्रस्संहारकारकः । एतौद्वौविबुधश्रेष्ठौ प्रसादक्रोधजावुभौ । तदादर्शितपंथानौसृष्टिसंहारकारकौ । निमित्तमात्रंतावत्रसर्वप्राणिवरप्रदा" विितिवचने स्पष्टीकृतं । ब्रह्मरुद्रादीनां मुमुक्षुभिरनुपास्यत्वं परिमितफलप्रदत्वंच तस्मिन्नेवाध्याये—"ब्रह्माणंशितिकण्ठंचयाश्चान्यादेवतास्स्मृताः । प्रतिबुद्धानमेवेतंयस्मात्परिमितं फल" मितिवचनेन स्फुटीकृतं । ब्रह्मरुद्रयोरजस्तमोऽभिभूतमनस्कत्वावहजायमानपुरुषविषयदृष्टिकत्वमष्टपंचाशदाधिकात्रिशततमाध्यायेऽभिहितम् "पश्यत्येनंजायमानंब्रह्मारुद्रोऽथवापुनः । रजसातमसाचैवमानसंसमभिप्लुत"मिति । उदाहृतेषु नारायणमाधिकृत्य प्रतिपादितेषु धर्मेष्वेकैकमपि सर्वस्मात्परत्वसाधने पर्याप्तं, किंपुनस्समुदितं; तथा ब्रह्मरुद्रावधिकृत्योक्तेष्वेकैकस्यापि परत्वव्यावर्तनक्षमतया तदाश्रययोर्ब्रह्मरुद्रयोस्सर्वस्मात्परत्वाभावास्सिद्धः । ततश्चोक्तरीत्या नारायणस्य सर्वस्मात्परत्वं शिवस्य तस्मादवरत्वंच प्रतिपाद्य नारायणस्यावतार-

विशेषे शिवपूजने प्रतिपाद्यमाने तदिदं नारायणस्य शिवपूजनं कथमिव प्रमाणविरुद्धं नारायणस्यावरत्वं शिवस्य परत्वंच व्यंजयेत्। यदि तयोः परावरभावमप्रतिपाद्य पूज्यपूजकभावः प्रतिपाद्येत, व्यज्येतापि तदा पूज्यस्य परत्वं पूजकस्य चावरत्वं। नत्वेवं प्रकृते। उपदर्शितरीत्या नारायणस्य सर्वप्रकारेण सर्वस्मात् परत्वस्य प्रतिपादनात्। नचात्र परब्रह्मत्वसंभावनावहमहिमप्रतिपादनमात्रं, नतु वस्तुतस्तस्य परब्रह्मत्वमिति शक्यं वक्तुम्; "तत्त्वंजिज्ञासमानानांहेतुभिस्सर्वतोमुखैः। तत्त्वमेकोमहायोगी हरिर्नारायणःप्रभुः" इति प्रागुदाहृतवचने नारायणएव परतत्त्वमिति न्यायानुगृहीतनिखिलवेदान्तैर्निष्पद्यतइति स्पष्टमुपदिष्टत्वात्। अत्रहि वचने हेतुपदं नानुमापकहेतुपरं, जगत्कारणीभूतपरतत्त्वस्य शास्त्रैकप्रमाणकतायाश्शास्त्रयोनित्वाधिकरणे समर्थितत्वात्। अपितु न्यायपरं। न्यायस्य प्रमाणानुग्राहकतयैवार्थसाधकत्वं नस्वतइति हेतुपदेनात्र वेदान्ताख्यप्रमाणानुग्राहकन्यायकदंबस्यैव विवक्षिततायावक्तव्यतया नारायणएव परतत्त्वमिति न्यायानुगृहीतवेदान्ताख्यप्रमाणसिद्धमित्येवोक्तवचनार्थोनिष्पद्यते। ततश्च नारायणएवपरतत्त्वमित्यास्मिन्नर्थे प्रबलप्रमाणस्योपपत्तेश्चात्रोपदिश्यमानत्वेन नारायणस्य परब्रह्मत्वसंभावनावहमहिमप्रतिपादनमात्रं नतु तस्य परब्रह्मत्वमित्युक्तिर्महासाहसमेव॥

इदमत्रावधेयं—तत्त्वंजिज्ञासमानानामिति, आलोड्यसर्वशास्त्राणीतिचोदाहृतश्लोकद्वयेन नारायणस्यैव परतत्त्वतायास्तस्यैव ध्येयतायाश्च विचारनिष्पन्नतां वदता भग-

वता वेदव्यासेनैव नारायणस्य परत्वे विवदमानानां तदन्यस्य परत्ववादिनांच प्रतिवादितामास्थाय तदुत्प्रेक्षितहेतूनां आभासतासूचनपुरस्सरं तदीयकोलाहलस्सर्वोऽपि निरस्तइति नास्माकमत्रार्किंचित्प्रतिवक्तव्यमवशिष्यते । किंबहुना—विशिष्य पशुपतेर्जगत्कारणतां प्रतिपादयतः पाशुपतागमस्यापि नारायणेनिष्ठां निष्ठानिर्णयाध्याये प्रागुदाहृते प्रतिपादितवता वेदव्यासेन शिवस्य परत्वकथा दूरोत्सारितैव । अपिच भगवतश्शिवपूजनस्य शिवांतर्यामिस्वपूजारूपतायाभगवतैवोक्तत्वादपि तत्पूज्यत्वेन वाच्येन तस्माच्छिवस्य परत्वव्यक्तिप्रत्याशा सुदूरनिरस्ता । महाभारतेहि शांतिपर्वणि नारायणीये पंचाशदधिकत्रिशततमाध्याये कृष्णकृतशिवपूजनं शिवांतरात्मनस्तस्यैव पूजनमित्युक्तं । तथाचतत्रार्जुनं प्रति भगवद्वचनानि—"कपर्दीजटिलोमुण्डःश्मशानगृहसेवकः । उग्रव्रतधरोरुद्रोयोगीपरमदारुणः । दक्षक्रतुहरश्चैव भगनेत्रहरस्तथा । नारायणात्मकोज्ञेयः पांडवेय!युगेयुगे । तस्मिन्हिपूज्यमानेवैदेवदेवेमहेश्वरे । संपूजितो भवेत्पार्थदेवोनारायणःप्रभुः । अहमात्माहिलोकानां विश्वेषांपांडुनंदन । तस्मादात्मानमेवाग्रेरुद्रंसंपूजयाम्यहं । यद्यहं नार्चयेयंवैईशानंवरदंशिवं । आत्मानंनार्चयेत्कश्चिदितिमेभावितंमनः । मयाप्रमाणंहिकृतं लोकस्समनुवर्तते । प्रमाणानि हि पूज्यानिततस्तंपूजयाम्यहं । नहिमेकेनचिद्देयोवरः पांडवनंदन । इतिसंचिंत्यमनसा पुराहंरुद्रमीश्वरं । पुत्रार्थमाराधितवानहमात्मानमात्मना । नहि विष्णुः प्रणमतिकस्मैचिद्विबुधायवै । ऋते आत्मानमेवेति ततो रुद्रंभजाम्यहं । सब्रह्मकास्सरुद्राश्च सेंद्रादेवास्सहर्षिभिः ।

अर्चयंति सुरश्रेष्ठं देवं नारायणं हरिं । भविष्यतां वर्ततांच भूतानां चैवभारत । सर्वेषामग्रणीर्विष्णुस्सेव्यः पूज्यश्च नित्यशः" इति । अत्रहि प्रकरणे अर्जुनेन भगवन्नाम्नां निरुक्तिं पृष्टोभगवान्कृष्णस्तंप्रति स्वनाम्नां निरुक्तिं वक्ष्यन्नादौ स्वस्य ब्रह्मरुद्रादिसकलजगत्स्रष्टृत्वमभिधाय यद्येवं रुद्रस्यापि स्रष्टा त्वं, कथं तर्हि भवतः पुत्रार्थं शिवाराधनं घटत इत्यर्जुनस्य शंकामाभूदिति तत्परिहाराय स्वकृतशिवाराधनस्य तत्वमाह—कपर्दी जटिलोमुण्डइत्यादिना । अवाप्तसमस्तकामस्य मम नकेनचित्कश्चिद्वरोदेयः; तथापि यद्यहं शिवमाराध्य तस्माद्यंकंचिद्वरं नगृह्णीयां, तदा शिवमाराध्य तस्माद्वरग्रहणे नकश्चिदपि लोके प्रवर्तेत । मदनुष्ठानानुवर्तीहि लोकः । अतोलोकस्य तत्र प्रवर्तनार्थं मया पुत्रार्थं प्राक् शिवआराधितः । यदिदं मया कृतमाराधनं, तदपि शिवांतरात्मनो ममैवाराधनं; यतो ब्रह्मरुद्रादीनां सर्वेषामहमाराध्यः; ममतु नकश्चिदाराध्योऽस्ति; अतस्सर्वेषामंतरात्माहं शिवस्यांतरात्मानं मामेवाराधयामीति स्वकृतशिवाराधनस्य तत्त्वमत्र भगवतोक्तं । "अहमात्मानमेवाग्रेरुद्रंसंपूजयाम्यह"मिति श्लोके रुद्रमात्मानमित्यस्य रुद्रशरीरकं मामित्यर्थः । "अहमात्माहि लोकानां विश्वेषां पांडुनंदने"ति तत्पूर्वार्धे भगवतस्सर्वांतरात्मत्वस्य सर्वशरीरकत्वपर्यवसितस्योक्तत्वात् । इत्थंच महाभारते प्रतिपाद्यमानं भगवतश्शिवपूजनं शिवांतर्यामिस्वपूजनमेवेति कथं तादृशेन शिवपूजनेन शिवस्य भगवदपेक्षया परत्वसिद्धिः । अत्रच पुत्रार्थमाराधितवानहमात्मानमात्मनेतीदमन्यार्थमपि भगवत्कृतं यद्यच्छिवाराधनं तस्य सर्वस्य प्रदर्शनार्थं । नहिमेकेन-

चिद्देयोवरः पांडवनंदनेति । नहिविष्णुः प्रणमतिकस्मैचिद्वि-बुधायच इति चानयोस्सर्वत्रसमत्वात्; तेन आदिपर्वणि सुभद्रापरिणयप्रस्तावे कैलासयात्रायां मैनाके अन्यत्रच तत्र तत्र महाभारते प्रतिपादितस्य भगवता कृष्णेन तत्पूर्वाव-तारैश्च कृतस्य शिवपूजनस्य तत्स्तोत्रस्य च तत्त्वं व्याख्या-तमिति नैतैरपि शिवस्य ततः परत्वसिद्धिः । अत्रच भगवत-श्शिवाराधने लोकानां प्रवर्तनं प्रतिपाद्यमानं शिवाय भगवता स्वदत्तवरविशेषपरिपालनार्थमिति निश्चीयते । उक्तंहि शिवाय भगवता वरदानं नारायणीये सप्तपंचाशदधिकत्रिशततमा-ध्याये—"एवंरुद्रायमनवे इंद्रायामिततेजसे। अहंदत्वावरान्प्री-तोनिवृत्तिपरमोऽभवमिति" यद्यप्यत्रभगवता शिवाय वरोदत्त-इति एतावन्मात्रमुक्तं नत्वीदृशोवरोदत्तइति, तथापि श्रीवा-राहे रुद्रगीतासु "एवमुक्तेपुनर्वाक्यमुवाचोमापतिस्तदा । अन्यंदेहिवरंदेवप्रसिद्धं सर्वजंतुषु । मर्त्योभूत्वाभवान्देवमामा-राधयकेशव । मांवहस्वचदेवेशवरंमत्तोगृहाणच । येनाऽहं सर्वदेवानां पूज्यात्पूज्यतमोभवे । श्रीभगवानुवाच—देवका-र्यावतारेषु मानुषत्वमुपागतः। त्वामेवाराधयिष्यामित्वमेववरदो-भव । इत्यत्रममसर्वलोकपूज्यतासिद्धये तत्तदवतारेषु त्वया-मत्पूजनंकार्यं मत्तश्च वरोग्रहीतव्य इति भगवन्तं प्रार्थितवते शिवाय तथैवास्त्विति भगवता वरदानप्रतिपादनादिह सामा-न्यतश्श्रुतस्य वरस्य तादृशविशेषे पर्यवसानस्य न्याय्यत्वा-त्तादृश एव वरोऽत्र--रुद्राय भगवद्दत्तत्वेन प्रतिपाद्यतइत्य-वसीयते । ततश्च स्वदत्ततादृशवरपरिपालनार्थमेव भगवत्कृतं लोकानां शिवपूजनेप्रवर्तनं इतियुक्तंप्रतिपत्तुम् । एतेन भग-

वता स्वानुष्ठानेन लोकानां शिवाराधने प्रवर्तनं वस्तुतश्शिवस्य विश्वाराध्यत्व विश्वाधिकत्वख्यापनार्थमिति निरस्तं । तथात्वे नहिविष्णुः प्रणमति कस्मैचिद्विबुधायवै इति, पुत्रार्थमाराधितवानहमात्मानमात्मनेतिचोक्तिविरोधात् । यद्यपि महाभारतएव शिवस्य परभावप्रतिपादनच्छायानुसारीणि कानिचिद्वचनान्युपलभ्यंते; तथापि तानि नारायणस्य परत्वप्रतिपादकवचनाविरोधेन नेतव्यानि । नचविपरीतं किंनस्यादिति शंक्यं; नारायणपरभाव प्रतिपादकवचनानां परतत्त्वनिर्धारणैदंपर्येण प्रवृत्ततया तेषां बलीयस्त्वेन तदविरोधेनान्येषां नेतव्यतायाएव न्याय्यत्वात । तथाहि—तत्त्वंजिज्ञासमानानामित्यादिपूर्वोक्तवचनस्य तावत्परतत्त्वनिर्धारणपरत्वं सुव्यक्तं; तथामोक्षधर्मपर्वणि नारायणीये षष्ट्यधिकत्रिशततमाध्याये—"बहवः पुरुषाब्रह्मन्नुताहो एक एव तु । कोह्यत्रपुरुषश्श्रेष्ठः कोवायोनिरिहोच्यते । इति जनमेजयप्रश्नमुपक्रम्य, बहूनां पुरुषाणांच यथैकायोनिरुच्यते । तथातं पुरुषं विश्वमाख्यास्यामि गुणातिग"मिति वैशंपायनस्यतत्प्रतिवचनं प्रस्तुत्य "तत्र यः परमात्माहि सनित्योनिर्गुणस्स्मृतः । सतुनारायणोज्ञेयस्सर्वात्मापुरुषोहिसः" इत्यादिः प्रतिवचनप्रकारो ब्रह्मरुद्रसंवादमुखेनदर्शितः । अनयोः प्रश्नप्रतिवचनयोरर्थः प्रागेवविवृतः । अत्र तत्त्वबुभुत्सया सामान्यतः प्रवृत्तस्य प्रश्नस्य नारायणाख्यविशेषविषयमुत्तरमभिहितं । अतः परतत्त्वनिर्धारणैदंपर्येण प्रवृत्तत्वमस्य संदर्भस्य स्फुटं । तथा तत्रैव एकोनषष्ट्यधिकात्रिशततमाध्याये—"सांख्यंयोगः पांचरात्रंवेदारण्यकमेवच । किमेतान्येकनिष्ठानिपृथ-

ङ्निष्ठानिवामुने" इति जनमेजयप्रश्नस्यसामान्यविषयस्य, "सांख्यंयोगः पांचरात्रं वेदाःपाशुपतंतथा। ज्ञानान्येतानिराजेंद्रविद्धिनानामतानिवै । यथागमंयथान्यायंनिष्ठानारायणःप्रभुः । नचैनमभिजानंतितमोभूताविशांपते । तमेवशास्त्रकर्तारःप्रवदंतिमनीषिणः । निष्ठांनारायणमृषिंनान्योस्तीतिचवादिनः । इतिविशेषविषयवैशंपायनप्रतिवचनेन सर्वशास्त्राणां नारायणनिष्ठत्वंप्रदर्शितं । अत्रापि तत्त्वबुभुत्सामूलकसामान्यप्रश्नविशेषविषयप्रतिवचनाभ्यां तत्त्वनिर्धारणैदंपर्यं स्पष्टं । तथा "मत्तोऽन्यानिचतेराजन्नुपाख्यानशतानिवै । यानिश्रुतानिसर्वाणितेषांसारोऽयमुद्धृतः । सुरासुरैर्यथाराजन्निर्मथ्यामृतमुद्धृतं । एवमेतत्पुराविप्रैःकथामृतमिहोद्धृतं" इत्यादिभीष्मवचनैः "इदंशतसहस्राद्धिभारताख्यानविस्तरात् । आमथ्यमतिमंथेनज्ञानोदधिमनुत्तमं । नवनीतंयथादध्नोमलयाच्चंदनंयथा । आरण्यकंचवेदेभ्यओषधीभ्योऽमृतंयथा । समुद्धृतमिदंब्रह्मन्कथामृतमनुत्तम"मितिजनमेजयवचनैश्च महाभारतसारत्वेनाभिहिते नारायणीयोपाख्याने "गृहस्थोब्रह्मचारीवावानप्रस्थोऽथभिक्षुकः । यइच्छेत्सिद्धिमास्थातुंदेवतांकांयजेतसः । मुक्तश्चकांगतिंगच्छेत्मोक्षश्चैवकिमात्मकः" ॥ इतियुधिष्ठिरेणमुमुक्षुभिर्यष्टव्यादेवता का; मुक्तप्राप्यंकिं; मोक्षश्चकिमात्मक इति तत्त्वबुभुत्सया सामान्यतः कृतानां प्रश्नानामुपरिचरवसुश्वेतद्वीपवासिवृत्तांतादिभिः "ततस्त्रैगुण्यहीनास्तेपरमात्मानमंजसा । प्रविशंतिद्विजश्रेष्ठाःक्षेत्रज्ञंनिर्गुणात्मकं । सर्वावासंवासुदेवंक्षेत्रज्ञंविद्धितत्त्वतः । यंप्रविश्यभवंतीहमुक्ताभरतसत्तम । सवासुदेवोविज्ञेयःपरमात्मासनातनः ।" इत्यादिवचनैश्चमुमुक्षुभिर्यष्ट-

व्योमुक्तप्राप्यश्च वासुदेवइति प्रतिवचनदर्शनादपि परतत्त्वनिर्धारणेदंपरत्वमस्योपाख्यानस्य दुष्प्रकंपं । एवंमोक्षधर्मपर्वाणिद्वादशाधिकद्विशततमाध्यायोक्तगुरुशिष्यसंवादे—"कुतश्चाहंकुतश्चत्वंतत्सम्यग्ब्रूहितत्त्वतः" । इतिशिष्येणसामान्यतःपृष्टे, "शृणुशिष्यमहाप्राज्ञब्रह्मगुह्यमिदंपरं । अध्यात्मंसर्वविद्यानांमागमानांचयद्वसु । वासुदेवस्सर्वमिदंविश्वस्यब्रह्मणोमुखं । पुरुषंसनातनंविष्णुं यंतंवेदविदोविदुः । सर्गप्रलयकर्तारं अव्यक्तंब्रह्मशाश्वत"मित्यादिना गुरुणा प्रतिवचनाभिधानादस्य संवादस्यानन्यपरत्वं दुरपह्नवं । एवमन्येपि सामान्यप्रश्नविशेषोत्तररूपास्सवांदाअत्र द्रष्टव्याः । एतेषांच सामान्यतः परतत्त्वप्रश्ने विशेषोत्तररूपतया परतत्त्वनिर्धारणैदंपर्यमकामेनापि स्वीकर्तव्यं । शिवपरभावप्रतिपादनच्छायानुसारिणस्तु नैवंविधाः । अतोनारायणपरभावप्रतिपादकवचनानामनन्यपरत्वेन प्रबलतया शिवपरभावप्रतिपादनच्छायानुसारीणि वचनानि तदविरोधेन नेतव्यानि । ततश्च शिवस्य परब्रह्मत्वसंभावनावहमाहात्म्यविशेषप्रतिपादनेन तत्स्तुतिपराणि तानि वचनानीत्यास्थेयं । अतएवमहाभारते तैस्तैश्चरितैः प्रसक्तस्य भगवतोऽपकर्षस्य परिहारवर्णनांशिवापकर्षस्य तदवर्णनंच संगच्छते वर्णितोह्युद्योगपर्वणिसप्तषष्टितमेध्याये भगवतोऽपकर्षशंकावहानां तच्चरितानामासुरमोहनार्थत्वोपदेशेन भगवदपकर्षाशंकापरिहारः । "कालचक्रंजगच्चक्रंयुगचक्रंचकेशवः । आत्मयोगेनभगवान्परिवर्तयतेऽनिशं । कालस्यचहिमृत्योश्चजंगमस्थावरस्यच । ईशतेभगवानेकस्सत्यमेतद्ब्रवीमिते । ईशन्नपिमहायोगीसर्वस्यजगतोहरिः । कर्माण्यारभतेकर्तुंकीनाशइवदुर्बलः । तेनवंचयते-

लोकान्मायायोगेनकेशवः । येतमेवप्रपद्यंतेनतेमुह्यंतिमानवाः” इति; नैवं शिवापकर्षस्य क्वचिदपि परिहारोवर्णितः अतश्शिवपरभावस्य तात्पर्यविषयत्वे शंकिततदपकर्षपरिहारस्यावश्यवक्तव्यतया तदनुक्तेर्भगवतश्शंकितापकर्षपरिहारोक्तेश्च भगवत्परभावएव महाभारततात्पर्यं सुदृढमवसीयतइति दिक् ॥

ननु महाभारते आत्माद्वैतस्यैव व्यासाभिमतत्वोक्तेरात्मभेदस्यात्मसु नारायणस्य सर्वस्मात्परतायाश्च महाभारततात्पर्यविषयत्वोक्तिः कथं संगच्छते । महाभारतेहि मोक्षधर्मपर्वणि नारायणीये षष्ट्यधिकत्रिशततमाध्याये, “बहवः पुरुषाब्रह्मन्नुताहोएकएवावि”ति जनमेजयप्रश्ने, “बहवः पुरुषाराजन्सांख्ययोगविचारिणां । नैतदिच्छंति पुरुषमेकंकुरुकुलोद्वह” । इतिपरमतमुपन्यस्य, “बहूनां पुरुषाणांहियथैकायोनिरुच्यते । तथातंपुरुषंविश्वमाख्यास्यामिगुणातिग”मिति श्लोकेन “सवाएषपुरुषोऽन्नरसमय” इतिश्रुतिदर्शनात्पुरुषशब्दाभिलप्यमानानां शरीराणां यथैकापृथिवीयोनिरिति सैव सर्वशरीरभावेनावतिष्ठते, तथैकमेवपुरुषं विश्वं सर्वजीवभावेनावतिष्ठमानमाख्यास्यामीति स्वमतंप्रतिज्ञाय, “समासतस्तुयद्व्यासः पुरुषैकात्म्यमुक्तवान् । तत्तेहंसंप्रवक्ष्यामिप्रसादादमितौजस” इतिश्लोकेन स्वप्रतिज्ञातस्य मतस्य व्यासमतत्वं प्रदर्शितं ।

अत्र श्लोके पुरुषैकात्म्यमित्यत्र ऐकात्म्यशब्दस्य एकश्चासावात्माच एकात्मा तस्य भावऐकात्म्यमिति व्युत्पत्त्या एकात्मत्वमित्यर्थः; ततश्च पुरुषाणामैकात्म्यमित्यनेन सर्वेषामात्मनामेकात्मत्वप्रतिपादनादात्माद्वैतमेव पुरुषैकात्म्यशब्दार्थः, नतु कस्यचिदन्येषामात्मनामंतर्यामित्वं, अपृष्टोत्तरत्वापत्तेः ।

आत्मबहुत्वस्य परमतत्त्वोक्तिविरोधप्रसंगाच्च । अतएव केषुचित्कोशेषु पुरुषैकत्वमुक्तवानित्येव पाठोदृश्यते; नहिपुरुषैकत्वमित्यस्य पुरुषाणामेकात्मवत्त्वमित्यर्थस्संभवदुक्तिकः । अतः क्वाचित्कपाठानुरोधेन पुरुषैकात्म्यमिति पाठेप्यात्मैक्यमेव तदर्थइत्याश्रयणीयं । ममांतरात्मातवचेत्युत्तरश्लोके अंतरात्मपदं स्वरूपपरमितिचास्थेयं । ततश्चात्माद्वैतमेव व्यासाभिमत्युदाहृतप्रतिवचनेन सिद्धामितिचेत्; अत्र ब्रूमः—नकेवलमत्रात्मैकत्वबहुत्वमात्रविषयः प्रश्नः; किंतर्हि । जगदुपादानकारणपुरुषविशेषविषयोऽपि । कोवायोनिरिहोच्यतइत्यपि प्रश्नवाक्ये दर्शनात् तस्यैतस्योपादानकारणपुरुषप्रश्नस्य प्रतिवचनेनैव सर्वोऽपि प्रश्नः प्रत्युत्तरितोभवतीत्याभिप्रेत्य तमिमं प्रश्नं प्रतिब्रुवता वैशंपायनेन "बहूनांपुरुषाणांहियथैकायोनिरुच्यते । तथातंपुरुषंविश्वमाख्यास्यामिगुणातिग"मित्यनेन श्लोकेन येनाकारेणोपादानकारणभूतो यः पुरुषः, तेनाकारेण तं पुरुषमाख्यास्यामीति प्रतिज्ञाय सचाकारोविश्वशरीरकत्वामिति विश्वमिति विशेषणेन द्योतयित्वा स्वोक्ते उपादानकारणस्य विश्वशरीरकत्वे प्रमाणसंप्रदायप्रदर्शनेन तस्य प्रामाणिकतामाविष्कर्तुमुक्तं "इदंपुरुषसूक्तंहि सर्ववेदेषु पठ्यते । ऋतं सत्यंच विख्यातमृषिसिंहेनचिंतित"मित्युपक्रम्य समासतस्तुयद्व्यासः पुरुषैकात्म्यमुक्तवानिति । पुरुषसूक्तेहि पुरुषएवेदं सर्वमिति सामानाधिकरण्येन जगदुपादानपुरुषस्य विश्वशरीरकत्वमुक्तं; अनेन स्वोक्तार्थेप्रमाणंदार्शितं; समासतस्तुयद्व्यासइत्यादिना तत्र संप्रदायः प्रदर्शितः, अतः पुरुषैकात्म्यशब्दस्य पूर्वोक्तार्थकत्वेनापृष्टोत्तरत्वप्रसंगः । नाप्यात्मबहुत्वस्य परमतत्त्वोक्तिविरोधप्रसंगः । बहवः

पुरुषाराजन्सांख्ययोगविचारिणा, मित्यत्रस्वतंत्रपुरुषबहुत्वस्यैव सांख्याद्यभिमतत्वोक्तेः । तथाविधपुरुषबहुत्वस्य पराभिमतताायास्तत्रोक्तत्वंच 'बहूनां पुरुषाणांहियथैकायोनिरुच्यते । तथातंपुरुषंविश्वमाख्यास्यामीत्यत्र बहूनां पुरुषाणां यत्किंचिदेकपुरुषकार्यतायास्स्वमतत्वोक्त्या ज्ञायते तथोक्त्या हि कारणपुरुषस्य स्वतंत्रत्वं कार्यभूतानां पुरुषाणां तत्परतंत्रत्वंच सिध्यति ॥

यत्तु बहूनां पुरुषाणामित्यादेरर्थांतरकल्पनां तदयुक्तं । बहवः पुरुषाब्रह्मन् वहवः पुरुषाराजन्नित्यादौ पूर्वंपरतश्चपुरुषशब्दस्य चेतनपरत्वदर्शनेन मध्येस्थितस्य पुरुषशब्दस्यापि तत्परतायाएव न्याय्यत्वात् । यथैकायोनिरुच्यतइत्यत्र पृथिवीपदाध्याहारप्रसंगात् । अन्यच्चात्रवक्तव्यं सर्वं पूर्वमेवोपपादितं । अतः समासतस्तु यद्व्यासइति श्लोके पुरुषैकात्म्यमिति पाठएव युक्तः, नतु पुरुषैकत्वमिति । यदिचतस्मिन्पाठेऽप्याग्रहः तदा बहवः पुरुषाब्रह्मन्निति प्रश्नश्लोके पुरुषपदं स्वतंत्रपुरुषपरं; ततश्च किं बहवस्स्वतंत्राः? उतएकएवस्वतंत्रः? एकस्यैवस्वतंत्रत्वपक्षे सकः? कारणभूतपुरुषश्च कः? इति प्रश्नश्लोकार्थः । अत्रोत्तरं बहवः पुरुषाराजन्नित्यादि; सांख्यायोगाश्च बहूनां पुरुषाणां स्वतंत्रत्वमिच्छंति, नत्वेकस्य स्वतंत्रत्वमन्येषां तत्परतंत्रत्वंच; बहूनां पुरुषाणां कारणभूतोयएकः पुरुषः यएकस्स्वतंत्रः अन्येच यत्परतंत्राइतियावत तंपुरुषमाख्यास्यामीति प्रतिज्ञाश्लोकार्थः । अस्मिन्विषये सांख्यादीनां व्यासस्यच विप्रतिपत्तिं प्रदर्शयन्व्याससिद्धांतमाह—उत्सर्गेणापवादेनेत्यादिना समासतस्तुयद्व्यासः पुरुषैकत्वमुक्तवानित्यंतेन । ततश्च स्वतंत्रपुरुषैकत्वं व्या-

सासिद्धांतइतिप्रतिवचनार्थः; बहुषु पुरुषेष्वेकस्स्वतंत्रइतेर तत्परतंत्राइतीममर्थंद्रढयितुं स्वतंत्रदेवताविशेषं निर्धारयितुंच ब्रह्मरुद्रसंवादोदाहरणं । तत्रच ममांतरात्मातवचेत्यादिना ब्रह्मरुद्रादीनां यत्किंचिदेकपुरुषनियाम्यत्वाद्युक्त्या तस्य स्वतंत्रत्वमितरेषां तत्परतंत्रत्वं तत्र यः परमात्मात्विल्यादिना तस्य नारायणाख्यदेवताविशेषरूपत्वंच स्पष्टमित्युक्तार्थद्रढीकरणसिद्धिरिति नकश्चिद्विरोधः । अथवा सर्वत्र पुरुषपदं चेतनमात्रपरमेव; प्रश्नश्चात्मनानात्वैकत्वादिविषय एव; प्रतिवचनेच बहवः पुरुषाराजन्नित्यादिना सांख्यादीनां पुरुषनानात्वाभ्युपगमं योनिभूतश्रेष्ठपुरुषानभ्युपगमंच प्रदर्श्य बहूनां पुरुषाणांहीत्यादिना आत्मनानात्वस्य स्वमतत्वप्रदर्शनपूर्वकं यथाबहूनां पुरुषाणां देवादिभावमापन्नानामेकोयोनिश्श्रुतिषूच्यते । तथा तं योनिभूतं विश्वं देवादिरूपेणावस्थितं तथापि गुणातिगं सत्वादिगुणत्रयरहितं पुरुषमाख्यास्यामीति प्रतिज्ञाय पुरुषनानात्वे देवादिभावापन्नपुरुषस्य योनिभूतपुरुषस्यच परस्परं भिन्नतया पुरुषं विश्वमिति कथं समानाधिकरणनिर्देशः तथा निर्देशोहि तयोरैक्ये संगच्छतइति जिज्ञासायां समासतस्तु यद्व्यासः पुरुषैकत्वमुक्तवान् तत्तेहं संप्रवक्ष्यामीत्यनेन पुरुषं विश्वं विश्वमेवेदंपुरुषः, पुरुषएवेदंसर्वमित्यादिसमानाधिकरणनिर्देशविषयंयोनिभूतपुरुषस्यैकत्वं व्यासेन यथोपपादितं,तथावक्ष्यामीतिच प्रतिज्ञाय पुरुषमाख्यास्यामीति प्रतिज्ञातपुरुषविशेषव्यक्तीकरणार्थं तत्तेहं संप्रवक्ष्यामीति प्रतिज्ञातसामानाधिकरण्योपपादकव्यक्तीकरणार्थंच ब्रह्मरुद्रसंवादमवतार्य ममांतरात्मातवचयेचान्येदेहसंज्ञिताः इति ब्रह्मवचनमुखेन सर्वत्रां-

तरात्मतयावस्थानमेव तत्तत्सामानाधिकरण्यनिबंधनं ततश्च सर्वेषामेव वस्तूनामंतरात्मानंप्रति प्रकारतया प्रकारवाचिशब्दानां प्रकारिपर्यंततया प्रकार्यैक्यविषयास्तत्तत्समानाधिकरणनिर्देशाइति सामानाधिकरण्योपपादकं योनिभूतपुरुषस्य सर्वांतरात्मत्वमुपदिश्य सतुनारायणोज्ञेयइत्यनेन योनिभूतपुरुषविशेषश्चोपदिष्टइति नकश्चिद्विरोधः। यद्यपि ममांतरात्मा तवचेत्यादिना अंतरात्मत्वं परमुपदिष्टं नतुतस्य सामानाधिकरण्योपपादकत्वं। तथाप्यस्मिन्नेव प्रबंधे स्थलांतरे अंतरात्मतयावस्थानादेव परमात्मनस्तत्तद्वस्तुसमानाधिकरणानिर्देशाइति स्पष्टमुक्ततयाऽत्रापि सामानाधिकरण्योपपादकोऽर्क्ति प्रतिज्ञायांतरात्मत्वोक्त्या तस्य सामानाधिकरण्योपपादकत्वं विवक्षितमिति निश्चीयते। तथाहि मोक्षधर्मपर्वणित्रयोविंशत्यधिकत्रिशततमाध्याये जनकयाज्ञवल्क्यसंवादे विश्वावसुंप्रतियाज्ञवल्क्यवचनानि। "यदातुमन्यतेन्योऽहमन्यएषइतिद्विजः। तदासकेवलीभूतष्षड्विंशमनुपश्यति ॥ अन्यश्चराजन्सपरस्तथान्यः पंचविंशकः। तत्स्थत्वादनुपश्यंतिएकएवेतिसाधवः। तेनैतन्नाभिनंदंतिपंचविंशकमच्युतं। जन्ममृत्युभयाद्भीतायोगास्सांख्याश्चकाश्यप। षड्विंशमनुपश्यंतश्शुचयस्तत्परायणाः। यदासकेवलीभूतष्षड्विंशमनुपश्यति । तदाससर्वविद्विद्वान्नपुनर्जन्मविंदति। एवमप्रतिबुद्धश्चबुध्यमानश्चतेनघ। बुद्धश्चोक्तोयथातत्त्वंमयाश्रुतिनिदर्शनात्"। इति। अत्रहि यदातुमन्यतेन्योहमिति श्लोकेन प्रकृत्यात्मविवेकानंतरं जीवविलक्षणपरमात्मदर्शनमभिधाय जीवपरयोस्तत्रतत्राभेदानिर्देशात्कथंपरस्य जीवविलक्षणत्वमिति शंकां परिहर्तुं तयोरभेदनिर्देशस्यान्यथासिद्धिर-

भिधीयते अन्यश्च राजन्सपरइति श्लोकेन । जीवःपरमात्माच परस्परंभिन्नावेव । अथापि परमात्मनोजीवात्मन्यवस्थितत्वात् तत्वविदःपरमात्मानं जीवंचैकइति पश्यंति अभेदेन व्यवहरंतीत्यर्थः । अत्र तत्स्थत्वादित्यनेन विवक्षितं जीवात्मन्यवस्थानं तदंतरात्मतयेति व्यक्तीकृतमुदाहृतब्रह्मरुद्रसंवादे ममांतरात्मा तवचेति ब्रह्मवचनेन । ततश्चजीवात्मन्यंतरात्मतयाऽवस्थानं परमात्मनस्तदभेदेन व्यवहारानियामकमित्यनेन वचनेन स्फुटीकृतं । अनंतरंच तेनैतन्नाभिनंदंतीति श्लोके तेन तदंतरवस्थितत्वेनाच्युतं षड्विंशंपरमात्मानं पंचविंशं जीवात्मानं नाभिनंदंति तयोस्स्वरूपैक्यं नानुमन्यंतेइति तयोस्स्वरूपैक्यस्य तत्वविदनभिमतत्वमुक्तं अचिज्जीवपरमात्मनां परस्परविलक्षणत्वं श्रुतिसिद्धमितिच एवमप्रतिबुद्धश्चेत्यादिनोपसंहारग्रंथेन दर्शितं । अतोऽत्र जीवपरयोस्स्वरूपैक्यस्य तत्वविदनभिमतत्वमुक्त्वावैदिकस्यलौकिकस्यचतयोरभेदव्यवहारस्य अंतरात्मतया तदंतरवस्थितिनिबंधनत्वोक्त्या प्रकार्यैक्यविषयाअभेदव्यवहाराइतिस्पष्टमभिहितत्वेन दर्शितब्रह्मरुद्रसंवादे परमात्मनोजीवांतरात्मत्वकथनं पूर्वप्रस्तुतजीवपरसामानाधिकरण्योपपादकविवरणार्थमेवेति निर्णीयते । अत्र, अन्यश्चराजन्सपरइत्यादिना संदर्भेण अधिकंतु भेदानिर्देशादिति सूत्राभिप्रेतार्थः; तत्स्थत्वादनुपश्यंतीत्यादिना अवस्थितेरितिकाशकृत्स्नइति सूत्राभिप्रेतार्थश्च विवृतइत्यवधेयं । अथवापुरुषैकत्वमुक्तवानित्यस्य एकस्यैव निरुपाधिक पुरुषत्वमुक्तवानित्यर्थः । अत एव तद्विषयतयाऽवतारिते ब्रह्मरुद्रसंवादे “ तस्यैकस्यमहत्त्वंहि सचैकः पुरुषस्स्मृत” इत्युच्यते । अत्रहि तस्यैकस्य महत्त्वमित्य-

नेन तदन्येषां महत्त्वव्यावर्तनवत् सचैकः पुरुषस्स्मृतइत्यनेन तदन्येषां पुरुषत्वव्यावर्तनं प्रतीयते; व्यावर्त्यमानंच पुरुषत्वं निरुपाधिकपुरुषत्वमेव, नतुपुरुषत्वमात्रं; पुरुषबहुत्वाभ्युपगम-विरोधात। तदेवं समासतस्तुयद्व्यासइति श्लोके पुरुषैकात्म्यमुक्त-वानिति वा पुरुषैकत्वमुक्तवानितिवा पाठोऽस्तु। पाठद्वयेऽपि ना-त्माद्वैतं तदर्थः। उपदर्शितोपक्रमोपसंहाराविरोधप्रसंगात् प्रकृति-पुरुषेश्वराणां परस्परवैलक्षण्यस्य श्रुतिसिद्धत्वप्रतिपादकस्थलां-तरविरोधप्रसंगाच्च। अपि तु प्रागुक्तएव तदर्थइति सर्वथा स्वतंत्र-परतंत्रभावापन्नपुरुषनानात्वमेव प्रघट्टकार्थः अतोनारायणपर-भावएव महाभारततात्पर्यमिति निर्धारणस्य नकश्चिद्विरोधः। तत्सिद्धंशारीरकमीमांसाप्रणेत्रा भगवता वेदव्यासेन महाभारते श्रियःपतिर्नारायणः परतत्त्वं अप्राकृतदेशविशेषावस्थित त-त्प्राप्तिपूर्वकतत्सायुज्यप्राप्तिरेवापुनरावृत्तिलक्षणमोक्षपुरुषार्थइति च प्रत्यपादीति ॥

॥ इति श्रीव्याससिद्धान्तमार्ताण्डे तृतीयः परिच्छेदः ॥

---

# श्रीव्याससिद्धान्त मार्ताण्डे
## चतुर्थः परिच्छेदः ।

---

अतीतेन परिच्छेदत्रयेण शारीरकमीमांसाप्रणेतुः परतत्त्व परमपुरुषार्थ विषयस्सिद्धान्तो निर्धारितः। तत्र प्रथमे परिच्छेदे शारीरकमीमांसायां समन्वयाध्याये कारणवाक्येषु श्रुतैः पुरुषसूक्त सुबालोपनिषदादि श्रुतपुरुषविशेष प्रत्याभिज्ञापकलिंगैस्तेषां नारायणे समन्वयस्य प्रदर्शितत्वेन पर तत्त्वविषयस्सिद्धान्तोनिरधारि । द्वितीये तत्रैव फलाध्याये उत्क्रांतिपादादि त्रिपादीस्थसूत्राणां स्वरसलभ्यार्थनिरूपणेन परोक्तानामर्थानां क्लिष्टकल्पनानुपपन्नता व्याघातादिदोषग्रस्तता निरूपणेन च पुरुषार्थविषयस्सिद्धान्तोनिरणायि । तृतीये च शारीरकसूत्रकृत्प्रणीते महाभारते मोक्षधर्मपर्वणि महाभारतसारभूते नारायणीये च परतत्त्वपरमपुरुषार्थ निर्धारणैदंपर्येण प्रवृत्तेषु बहुषु संवादेषु तथाविधयोरेव तत्त्वपुरुषार्थयोर्निर्णीतत्वेन तत्संवादादपि सएव शारीरकसिद्धान्तइति निरचायि । अतः श्रियःपतिर्नारायणःपरं तत्त्वम् अप्राकृतदेशविशेषे तत्सायुज्यप्राप्तिरेवापुनरावृत्तिलक्षणमोक्षपुरुषार्थइति भगवद्व्याससिद्धान्तइति सिद्धम् । एतेन यदुक्तं व्यासतात्पर्यनिर्णयकृता भास्करयादवप्रकाशादिभिर्वैयासकानि सूत्राणि स्वस्वाभिमतमतानुगुण्येन व्याख्याय तत्तन्मतस्य व्यासतात्पर्यविषयत्वव्यवस्थापनात्तेषां च मतानां परस्परविरुद्धत्वेन सर्वेषां तेषां

व्यासतात्पर्यविषयत्वायोगेन तेषु कस्याचिदेकस्यैव तत्तात्पर्य विषयताया अवश्यमङ्गीकर्तव्यतया तेषु कस्य तत्तात्पर्यविषयत्वं कस्यनेति संशये संप्रतिपन्नमध्यस्थेन केनचिद्व्यासमतत्वेन यदनूदितं तदेवव्यासतात्पर्यविषयइति निर्णयोयुक्तः। इत्थंचद्वैताऽद्वैत भेदाभेदादिवेदान्तिमताभिमानशून्यत्वेनासंभावनीय पक्षपाततया संभवन्माध्यस्थ्येन कपिलमहर्षिणा स्वदर्शने स्वमतप्रतिष्ठापनाय परमतानुवादपूर्वकतन्निराकरणावसरेऽद्वैतमेव व्यासमतत्वेनानूद्य तस्यनिराकृततयाऽद्वैतमेव व्यासतात्पर्यविषयइति निर्णीयते। तथाहि सांख्यदर्शने पारमर्षाणिसूत्राणि। प्र। अ। २०। नाविद्यातोऽप्यवस्तु नाबंधायोगात् २१ वस्तुत्वेसिद्धान्तहानिः २२ विजातीयद्वैतापत्तिश्च १५४ नाद्वैतश्रुतिविरोधोजातिपरत्वात्। पंचमाध्याये १३ नाविद्याशक्तियोगोनिस्संगत्वात् ५४ नानिर्वचनीयस्य तदभावात् ६१ नाद्वैतमात्मनोलिंगात्तद्भेदप्रतीतेः ६५ नात्माविद्यानोभयं जगदुपादानकारणंनिस्संगत्वात्। षष्ठाध्याये ४६ उपाधिश्चेत्तत्सिद्धौ पुनर्द्वैतम् ५२ जगत्सत्यत्वमदुष्टकारणजन्यत्वाद्बाधकाभावात् इति एतेषां सूत्राणामद्वैतमतानुवादपूर्वकं तन्निराकरणपरत्वं स्पष्टम्। विशेषतश्चतत्सूत्रव्याख्यात्रा अनिरुद्धेननानिर्वचनीयस्य तदभावादिति सूत्रमवतारयता वेदान्तिमतं दूषयति नेतीत्यवतारितम्। तथा नाद्वैतमात्मनोलिंगादिति सूत्रावतरणिकायां एकएवात्मेतितन्निराकरोति नेतीत्युक्तम्। तथा नात्माऽविद्येत्यादि सूत्रावतरणग्रन्थे एकात्मवादिनां जगदुपादानकारणमपिनास्तीत्याह नेतीत्यभिहितम्। जगत्सत्यत्वमित्यादि सूत्रंच जगतोमिथ्यात्वात्कथमन्यथासिद्धिरित्यत्राहेत्यवतारि-

तम् अत एतेषु सूत्रेष्वद्वैतमतमनूद्य, तस्यदूषितत्वाद्द्वैतमेव व्यासमतमिति निश्चीयते। नन्वेतेषु सूत्रेष्वद्वैतस्यानुवादो दूषणं चास्तु; तावता तस्य कथं व्यासमतत्वसिद्धिः। नहि सूत्रे व्याख्यानेवा व्यासमतमित्युक्तमिति चेन्न; उदाहृतेषु कपिलसूत्रेषु अद्वैतानिर्वचनीयवादादेरतिस्फुटतया प्रतीयमानत्वेन तादृशवाद्याकांक्षायां पतंजलिजैमिनिगौतमकणादादिसूत्रकाराणां पाशुपतादितांत्रिकमतप्रविष्टानां बाह्यमतप्रविष्टानां च अद्वैतानभ्युपगमाद्वादित्वासंभवेन परिशेषाद्गौतमकणादप्रभृतिसूत्रकारमतनिराकरणप्रायपाठानुरोधेन वेदान्तसूत्रकारमतनिराकरणस्यैवोचितत्वेन व्यासादन्यस्य कस्यचिद्वेदान्तसूत्रकारस्यानुपलंभाच्च व्यास एव वादीति निश्चीयमानत्वादिति, तन्निरस्तम्। अन्यादृशस्यैव व्याससिद्धान्तस्य सोपपत्तिकं प्रदर्शितत्वात्; व्याससूत्रतात्पर्यसंशये तदीयग्रंथांतरेण तन्निर्णयस्यैवोचिततया पुरुषांतरीयानुवादबलेन तन्निर्णयस्यायुक्तत्वाच्च। तथाहि—एककर्तृकयोरेकविषयकग्रंथयो रेकत्र तात्पर्यसंशये सुस्पष्टतात्पर्येणान्येन तन्निर्णय एव न्याय्यः, नतुसुस्पष्टतात्पर्यकतदीयग्रंथविरुद्धानुवादकपुरुषांतरीयानुवादेन ; तत्पुरुषीयपुरुषांतरीयवचनयोर्मध्ये तत्पुरुषीयवचनस्यांतरंगत्वेन प्रबलत्वात्। ततश्च प्रकृते भगवद्व्यासप्रणीतयोः परतत्त्वपरमपुरुषार्थविषययोश्शारीरकशास्त्रमहाभारतयोर्मध्ये शारीरकशास्त्रतात्पर्यसंदेहेऽसंदिग्धतात्पर्यकमहाभारतेन तत्तात्पर्यनिर्णयो न्याय्यः ; नतु कपिलादिपुरुषांतरीयानुवादेन। इत्थंच महाभारते—'तत्त्वंजिज्ञासमानानां हेतुभिस्सर्वतोमुखैः। तत्त्वमेको महायोगीहरिर्नारायणः पर' इत्यादिषु परतत्वस्य तृतीयपरिच्छेदोदाहृतमोक्षधर्मवचनेषु परमपुरुषार्थे तत्प्राप्त्युपायतत्प्राप्ति-

क्रमाणां चाऽसंदिग्धमवगम्यमानतया शारीरकशास्त्रस्यापि तेष्वेव तात्पर्यमिति निर्णयएवयुक्तः, अपिच कपिलानुवादानुरोधेन शारीरकशास्त्रस्याद्वैते तात्पर्योपगमे भगवतोवेदव्यासस्य स्वयमन्यथान्यायैरर्थनिर्णयः, अन्यथा च तत्त्वबुभुत्सुभ्यः उपदेश इति प्रतारकत्वमुन्मत्तत्वंवाऽपरिहार्यमापतेत्, शारीरकेहिन्यायैरुपनिषदर्थो निर्णीयते, महाभारतेचोपनिषदर्थ उपदिश्यते, ततश्च तयोर्भिन्नार्थत्वे दर्शितदोषोदुर्वारएवभवेत्। महाभारतस्य चाद्वैते तात्पर्यं कथं चिदपि दुर्वचम् । तत्रात्मनानात्वस्य चिदचिदीश्वरभेदेन तत्वत्रैविध्यस्य जीवात्मनां मुक्तिदशायां परमात्मसाधर्म्यप्राप्तेश्च विशदमुपदेशदर्शनात् । परमात्मोपदेशप्रकरणेषु तस्य निर्गुणत्वोक्तिस्तु सत्त्वादिगुणत्रयराहित्याभिप्रायेणेति तत्प्रकरणपूर्वापरपरामर्शशीलानां सुगमम् । ननु महाभारते व्यावहारिकभेद उपासनविधानार्थमनूद्यते; शारीरकेतुपारमार्थिकमद्वैतं न्यायैर्निर्धार्यत इति नोक्तदोषप्रसंगइति चेन्न। 'बहवः पुरुषाब्रह्मन्नुताहो एक एव' त्वित्यादि तत्त्वबुभुत्सामूलकप्रश्नप्रतिवचनप्रकरणेष्वात्मबहुत्वोक्के स्तत्त्वोपदेशरूपताया अवर्जनीयतयोक्तदोषस्य दुरुद्धरत्वात् । किंबहुना—'समासेनतुयव्यासः पुरुषैकात्म्यमुक्तवान् । तत्तेऽहं संप्रवक्ष्यामिप्रसादादमितौजसः' इत्यादिना साक्षाद्व्यासशिष्येण वैशंपायनेन स्वेतरसकलात्मनां कश्चिदेकोऽन्तरात्मेति व्याससिद्धान्तइति, पुरुषैकत्वमुक्तवानितिपाठेऽपि चेतनाचेतनभेदभिन्नप्रकारविशिष्ट प्रकार्यैक्यं व्याससिद्धान्तइति, बहुषुपुरुषेष्वेकः स्वतंत्र इति तत्सिद्धांत इति निरुपाधिकपुरुषत्वमेकस्यैवेति तत्सिद्धान्तइतिवा कण्ठरवेणाभिहिततया तद्वैपरीत्येन उदासीनकपिलानुवादसिद्धपारिशेषानुमानेनात्माद्वैतं व्याससिद्धान्तइति निर्णयोऽत्यंतानुचितएवेतिविद्व-

द्भिर्विभावनीयम्। अत्र पुरुषैकत्वमुक्तवानिति पाठे यद्यपि 'बहवः पुरुषाब्रह्मन्नुताहो एक एव' त्वितिप्रश्ने पुरुषैकत्वपक्षमवलंब्य प्रतिवचनरूपता तस्य स्वरसतः प्रतीयते। तथाऽपि स्वारस्यलोभेन तस्यात्माद्वैतपरत्वाभ्युपगमे तद्विषयतयाऽवतारिते ब्रह्मरुद्रसंवादे बहुष्वात्मस्वेकस्य महत्त्वमहापुरुषसंज्ञाभाक्त्व सर्वचेतनांतरात्मत्वादिप्रतिपादनेन व्यासोक्ततयोक्तस्य पुरुषैकत्वस्य तद्विषयतयाऽवतारितब्रह्मरुद्रसंवादस्य च परस्परसंबंधाभावप्रसंगेन 'बहूनां पुरुषाणांहियथैकायोनिरुच्यते' इति पूर्वप्रतिज्ञाविरोधप्रसंगेन च तत्परिहारायापातप्रतिपन्न स्वारस्यपरित्यागेन ब्रह्मरुद्रसंवादाद्यनुरोध्यर्थवर्णनस्यैव न्याय्यतया प्रागस्मदुक्तरीत्यैव तदर्थोवर्णनीयइति सूक्ष्मेक्षिकयाऽऽकलनीयम्। तत्सिद्धं व्याससूत्रतात्पर्यसंशये तत्समानकर्तृक समानविषयकासंदिग्धमहाभारतेन तत्तात्पर्यनिर्णयएवोचितः नतु कपिलानुवादेन तन्निर्णयइति। इदंच कपिलसूत्रेषु व्यासमतमेवानूदितमित्येतदभ्युपगम्योक्तम्। वस्तुतस्तु कपिलसूत्रेषु व्यासमतस्यानूदितत्वमेवासिद्धं। कपिलसूत्रेष्वनूदितानामविद्यातोबंध इत्यादीनां व्याससूत्रेषु कुत्राऽप्यनुक्तत्वात्, तथाहि— नाविद्यातोऽप्यवस्तुनाबंधायोगात्। वस्तुत्वेसिद्धान्तहानिः। विजातीयद्वैतापत्तिश्चेति सूत्रेष्वनूदितम् यत्वस्तु भूतया अविद्ययाबंधइति, तदेतद्व्याससूत्रेषु कुत्रापि नोपलभ्यते। प्रत्युत ब्रह्ममीमांसातृतीयाध्याय द्वितीयपादे संध्याधिकरणस्थे 'पराभिध्यानात्तुतिरोहितं ततोह्यस्य बंधविपर्ययौ'वितितदीयसूत्रे तद्विरुद्धमेवोपलभ्यते। तत्र हि बंधमोक्षयोः परमात्मनिग्रहानुग्रहमूलकत्वमभिहितम्। तच्च बंधस्य पारमार्थिकत्वसाधकतया तदपारमार्थिकत्वसाधकस्यापरमार्थभूताविद्या मूलकत्वस्य विरुद्धमेव। अतो-

नायंव्यासमतानुवादः, कस्यतर्हिमतानुवादोऽयमिति चेत्सुगतस्येतिगृहाण । तन्मतेहि संवृत्यपराभिधानावस्तुभूताविद्यामूलकतया सर्वस्य सांवृतिकत्वमंगीक्रियते । अतोबंधस्याप्यविद्यामूलकत्वं तन्मतासिद्धमत्रानूद्य निराक्रियतइतियुक्तंप्रतिपत्तुम् । अवश्यंचैतदेवमेवप्रतिपत्तव्यम् । वस्तुत्वेसिद्धान्तहानिः विजातीयद्वैतापत्तिश्चेत्युत्तरसूत्रोक्तस्याविद्यायाः परमार्थत्वेविजातीयद्वैतापत्तिरिति दूषणस्य सौगतान्प्रत्येव संगतेः । अद्वैतिवेदांतिनांमते सजातीयद्वैतस्याप्यानिष्टतया तेषांप्रतिवादित्वे सूत्रेविजातीयपदवैयर्थ्यप्रसंगात् । सौगतानां प्रतिवादित्वेतु क्षणिकविज्ञानसंतानस्य तन्मतेऽभ्युपगमेन सजातीयद्वैतस्येष्टतया तद्व्यावर्तकतया विजातीयपदसार्थक्योपपत्तिरिति । यत्तु—'उपाधिभेदेऽप्येकस्य नानायोग आकाशस्येव घटादिभि'रित्यादिकपिलसूत्रैरनूद्यमानस्यौपाधिकभेदस्य 'अतएव चोपमासूर्यकादिवत् आभासएवच' इत्यादिषु ब्रह्मसूत्रेषूपलभ्यमानतया तस्यैवायमनुवादइति । तदसत्, अतएवचोपमासूर्यकादिवदित्यस्मिन् ब्रह्ममीमांसातृतीयाध्यायद्वितीयपादे उभयलिंगाधिकरणस्थे सूत्रे जलप्रतिबिंबितसूर्यदृष्टान्तेन यथा जलेप्रतिबिंबितस्सूर्यस्तद्गतचलनादिदोषैर्नस्पृश्यते तथापरमात्माऽपि पृथिव्यादितत्तत्स्थानेषुस्थितोऽपि तद्गतदोषैर्नस्पृश्यतइत्ययमर्थ एव विवक्षितो नतु तत्तदुपाधिप्रतिफलनप्रयुक्तापरमार्थगुणवत्त्वमिति प्राग्द्वितीयपरिच्छेदे सुष्टुनिरूपितत्वेन परमात्मन औपाधिकभेदस्य तत्सूत्रोक्ततायाः एवासिद्धेः । यदपि ब्रह्ममीमांसाद्वितीयाध्यायतृतीयपादे अंशाधिकरणस्थेन 'आभासएवचे'ति सूत्रेण ब्रह्मणः प्रतिबिंबोजीवइत्यर्थकेन औपाधिकभेदप्रतिपादना त्तस्यैवायमनुवादइति । तदप्यसत्, 'अंशोनानाव्यपदेशादन्यथाचाऽपि दाशकि-

तवादित्वमधीयतएके' इत्यस्मिन्सूत्रे जीवस्य ब्रह्मांशताया व्यवस्थापितत्वेन पुनस्तस्यआभास एव चेत्यस्मिन्सूत्रे ब्रह्मप्रतिबिंबत्वाभिधाने तद्विरोधप्रसंगेनास्यसूत्रस्य तदर्थकताया अयुक्तत्वात् । नचांशसूत्रोक्तेब्रह्मांशत्वेऽरुच्या ब्रह्मप्रतिबिंबत्वमनेन सूत्रेणाभिधीयइति नविरोध इतिवाच्यम् । अंशोनानाव्यपदेशादन्यथाचापीत्याद्यसूत्रेण जीवस्य ब्रह्मांशत्वमभिधाय तत्र 'मंत्रवर्णात्, अपिस्मर्यते' इतितदनंतरसूत्राभ्यां 'पादोऽस्यविश्वाभूतानि, ममैवांशोजीवलोकेजीवभूतः सनातनः' इतिश्रुतिस्मृतिप्रमाणोपन्यासेन 'प्रकाशादिवन्नैवं पर' इत्यादिना तदनंतरसूत्रचतुष्टयेन तत्रप्रसक्ताक्षेपपरिहारेणच जीवस्य ब्रह्मांशतायाः अप्रामाणिकत्वानुपपन्नत्वयोः परिहृततया तत्रारुचिबीजाभावेनांशत्वं परित्यज्य प्रतिबिंबत्वमनेन सूत्रेणाभिधीयते इत्यस्याश्रद्धेयत्वात् । नीरूपस्य ब्रह्मणः प्रतिबिंबायोगेन प्रतिबिंबपक्षस्यैवानुपपन्नत्वाच्च । कस्तर्हि आभासएचेति सूत्रार्थइतिचेत् शृणु तदर्थम्—अंशसूत्रे श्रुतिषु जीवब्रह्मणोः क्वचिद्भेदव्यपदेशः क्वचिदभेदव्यपदेश इति द्विविधव्यपदेशमुख्यत्वसिध्यन्यथानुपपत्त्या जीवस्यब्रह्मांशत्वं प्रसाध्य प्रकाशादिवन्नैवं परइति सूत्रेण तच्चब्रह्मांशत्वं प्रभादीनां प्रभावदाद्यंशत्वमिव विशिष्टवस्तुन्यपृथक्सिद्धविशेषणांशत्वरूपमतोविशेषणविशेष्ययोर्जीवब्रह्मणोः स्वरूपभेदात् नस्वभावसंकरइति अभिधाय जीवब्रह्मणोर्जीवानांच परस्परं स्वरूपभेदाऽनभ्युपगमपक्षे भोगव्यतिकरप्रसंगस्यदुर्वारतामुद्भावयितुं स्वपक्षे तेषां भोगव्यतिकराभावउक्तः असंततेश्चाव्यतिकरइति सूत्रेण, समंताच्चतिस्संततिस्सर्वत्रव्याप्तिर्विभुत्वमिति यावत् । तदभावोऽसंततिः अणुत्वं । च शब्देनान्योन्यभेदस्समुच्चीयते । ततश्च जीवानामन्योन्यभे-

दादणुत्वाच्चाव्यतिकरः भोगव्यतिकराभाव उपपद्यते इति सूत्रार्थः । अयंभावः—जीवात्मनां प्रतिशरीरंभिन्नत्वादणुत्वाच्च भोगव्यवस्थाया उपपत्तिः । जीवब्रह्मणोर्जीवानांच स्वरूपभेदमनभ्युपगम्य आत्मैक्याभ्युपगमेतु भोगव्यवस्थानुपपत्तिर्दुर्वारैवेति । इदानीं स्वोक्तादात्मनां स्वाभाविकभेदादन्यस्याव्यतिकरहेतोराभासत्वमुच्यते "आभासएवचेति" आत्मनांस्वाभाविकभेदादन्यऔपाधिकभेदादिर्भोगव्यतिकरानुपपादकएवेत्यर्थः । अयंभावः—उपाधीनांभेदेऽपि तेषां भोगानाश्रयतया भोगाश्रयस्यात्मन ऐक्यादापतद्भोगसांकर्यमुपाधिभेदो न परिहर्तुंक्षमइति । तदेवमाभासएवचेति सूत्रस्यौपाधिकभेदार्थकत्वविरहेण प्रत्युत औपाधिकात्मभेदपक्षस्योक्तरीत्या दूषितत्वेनच ब्रह्ममीमांसोक्तौपाधिकाऽऽत्मभेदस्सांख्यसूत्रेऽनूद्यत इत्येतदयुक्तमेव । यदपि 'नाऽऽत्माविद्यानोभयंजगदुपादानकारणंनिस्संगत्वा'दिति सांख्यदर्शनपंचमाध्यायगतषट्पंचाश (५-५६) सूत्रेण ब्रह्ममीमांसा समन्वयाध्यायस्थ 'प्रकृतिश्च प्रतिज्ञादृष्टांतानुपरोधा' दिति सूत्रोक्तं ब्रह्मणो जगदुपादानकारणत्वं दूष्यतइतितावत् स्फुटंप्रतीयते । तत्रचकिंकेवल आत्माकारणं ? किंवाऽविद्या अथवा उभयमिति त्रेधाविकल्प्य दूषणावसरे अविद्याशब्देन नतावत् सांख्याभिमता प्रकृतिर्विवक्षितेति शक्यंवक्तुम् ; सांख्यमते तस्याएव जगदुपादानकारणत्वाभ्युपगमेनतन्निराकरणायोगात् । अपितु नाविद्यातोऽप्यवस्तुनाबंधायोगादिति सांख्यदर्शनप्रथमाध्यायस्थसूत्रोपात्तावस्तुभूताविद्यैवविवक्षितेतिवक्तव्यम् । इत्थंचापरमार्थभूताविद्या विशिष्टब्रह्मणो जगदुपादानकारणत्वं प्रकृतिश्चेत्याद्युदाहृत सूत्रे विवक्षितामिति कृत्वा सांख्यसूत्रे तान्निराकरणेनापरमार्थभूतमायाऽपरपर्यायाऽविद्याविशिष्टब्रह्मणोज-

गदुपादानत्वमेव व्यासाभिमतमिति सिध्द्या तस्यचाद्वैतमत-मात्रसिद्धतयाऽद्वैतमेव व्यासतात्पर्यविषय इति निर्णीयत इति, तदप्यसत्—ब्रह्ममीमांसायामवस्तुभूताविद्यायाः कचिदपि जगदुपादानत्वस्यानुक्ततया परंब्रह्मजगदुपादानमिति तन्निर्णीतार्थे आत्मावा अविद्यावा तदुभयंवाजगदुपादानमिति विकल्पस्यावकाशविरहेणोदाहृतसांख्यसूत्रस्य तन्निराकरणपरत्वायोगात्। अद्वैतिमतसिद्धविवर्तोपादानत्वस्य व्यासतात्पर्यविषयत्वे प्रकृत्यधिकरणे परिणामादिति सूत्रस्थाने विवर्तादित्येव सूत्रयितव्यत्वप्रसंगेन परिणामादिति सूत्रप्रणयनस्यानुचिततया दर्शितसांख्यसूत्रकृतो विवर्तोपादानत्वं व्यासतात्पर्यविषय इत्यभिप्रायासंभवेनाप्युक्तसांख्यसूत्रस्य ब्रह्ममीमांसासिद्धान्तनिराकरणपरत्वायोगात्। तत्सिद्धमुदाहृतसांख्यसूत्रेणाप्यद्वैतमेव व्यासतात्पर्यविषय इति निर्णयोनयुक्त इति। ननु नात्माविद्यानोभयंजगदुपादान'मिति सांख्यसूत्रेण यदिव्यासमतं न निराक्रियेत तर्हि आत्मनो जगदुपादानत्ववादिनोऽन्यस्यकस्यचिद्दर्शनप्रवर्तकस्यादर्शनेनास्य सूत्रस्य प्रवृत्तिरेव नोपपद्यते इति चेदत्रोच्यते—वेदान्तेष्वापाततः प्रतीयमाना आत्माद्वैतप्रपंचमिथ्यात्वौपाधिकभेदाविद्योपहितब्रह्मोपादानत्वादयोऽस्मिन् शास्त्रे तेषु तात्विकत्वबुद्धिवारणाय निराक्रियंते। तथाहि— 'तत्त्वमसि, अयमात्माब्रह्म, नान्योऽतोऽस्तिद्रष्टा, नेहनानाऽस्तिकिंचन, 'आकाशमेकं हियथा घटादिषु पृथग्भवेत। तथात्मैकोप्यनेकस्थोजलाधारेष्विवांशुमान्, अस्मान्मायीसृजतेविश्वमेतत्। इत्यादिष्वापातत आत्मैकयादयः प्रतीयंते। तेचाऽत्र नाद्वैत मात्मनोलिंगात्तद्भेदप्रतीतेः ५-६९ जगत्सत्यत्वमदुष्टकारणजन्यत्वाद्बाधकाभावात् ६-५२ उपाधिभेदेऽप्येकस्य नानायोग आ-

काशस्येव घटादिभिः १-१५० नात्माविद्यानोभयं जगदुपादानं निस्संगत्वात् ५-६५ इत्यादिभिस्सूत्रै र्निराक्रियंते। तदुक्तं विज्ञानयतिना सांख्यप्रवचनभाष्यकृता नात्माविद्यानोभयमिति सूत्रभाष्ये—'अत्र च ब्रह्ममीमांसासिद्धान्तोनदूष्यते अपितुवेदान्तेष्वापाततस्संभावितोऽर्थ एव निराक्रियतइति स्मर्तव्यम् एवमुत्तरसूत्रेष्वपीति। युज्यतेचैतत ब्रह्ममीमांसायामात्माद्वैत जगन्मिथ्यात्वाविद्योपहितब्रह्मोपादानत्वादेः क्वचि दप्य सूत्रितत्वेन प्रत्युततत्रापि आत्माद्वैतजगन्मिथ्यात्वादे र्निराकृतत्वेन च आत्माद्वैतादि निराकरणपराणांसांख्यसूत्राणां वैयासक सूत्रार्थनिराकर्तृत्वासंभवेन परिशेषादुपनिषत्स्वापातप्रतीतार्थनिराकरणपरताया एवैष्टव्यत्वात। यथाहिसांख्यदर्शने 'नात्माद्वैतमात्मनोलिंगात्तद्भेदप्रतीते'रिति सूत्रेणात्माद्वैतं निराकृतम् तथा वैयासकदर्शनेऽपि' इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्ति'रिति सूत्रेणात्माद्वैतमाशंक्य 'अधिकंतुभेदनिर्देशा'दिति सूत्रेण तन्निराकृतम्। यथाच सांख्यदर्शने' 'जगत्सत्यत्वमदुष्टकारणजन्यत्वाद्बाधकाभावा'दिति सूत्रेण जगतोमिथ्यात्वं निराकृतम् तथावैयासकदर्शनेपि 'वैधर्म्याच्चनस्वप्नादिव' ।दितिसूत्रेणजगतोमिथ्यात्वं निराकृतम्, अनेनैव जगतोऽविद्योपहित ब्रह्मोपादानकत्वमपि 'नात्माविद्यानोभयं जगदुपादान'मिति सांख्यदर्शन इव निरस्तं भवति। अविद्योपहितब्रह्मोपादानकत्वेमिथ्यात्वप्रसंगात् एवमादीनां व्याससूत्राणामभिप्रायांतरं क्लिष्टकल्पनयापरिकल्प्य सूत्र स्वरसविरुद्धमात्माद्वैतजगन्मिथ्यात्वादिपरत्वं सूत्रेषु बलादारोप्य तदेव व्यासदर्शनमिति तदेव सांख्यसूत्रेष्वनूद्यनिराक्रियत इति च कल्पनमत्यंतहेयमेव। विवादः पुनरनयोः प्रधानस्यस्वरूपे परिणामप्रकारेच। ब्रह्मात्म-

कंप्रधानम् अनीदृक्प्रधानमिति स्वरूपे ईश्वराधिष्ठितं परिण-मते स्वतः परिणमतइति परिणामे, तदेतत्तत्तत्सूत्रा देवावगम्यते । तथाहि—ब्रह्ममीमांसासमन्वयाध्याय चतुर्थपादे चमसाधिकरणे 'ज्योतिरुपक्रमातु तथाह्यधीयत एके' इति सूत्रेण जगदुपादानस्य प्रधानस्य ब्रह्मात्मकत्वं निर्णीतम्। अत्रहि 'अजामेकांलोहितशुक्लकृष्णां बह्वीः प्रजास्सृजमानां सरूपाः। अजोह्येकोजुषमाणोनुशेते जहात्येनां भुक्तभोगामजोऽन्यः" इति श्वेताश्वतरमंत्रेऽजाशब्देन किं कापिलतंत्रासिद्धा अब्रह्मात्मिका प्रकृतिरुच्यते? उत ब्रह्मकार्यतया ब्रह्मात्मिका सेति संशये सिद्धान्तउक्तः—ज्योतिरुपक्रमातु तथाह्यधीयत एक इति । दर्शितेऽजामंत्रेऽजाशब्देन ज्योतिरुपक्रमा प्रकृतिरभिधीयते। ज्योतिः परंब्रह्म ज्योतिषांज्योतिरित्यादिषु ज्योतिश्शब्दस्य परब्रह्मणि प्रयोगदर्शनात् । तत् उपक्रमः कारणं यस्यास्सा ज्योतिरुपक्रमा ब्रह्मकार्यभूतेत्यर्थः । एके तैत्तिरीयशाखिनस्तथा ब्रह्मकार्यत्वेनैनां प्रकृतिमधीयतेहीति सूत्रार्थः । अयंभावः—तैत्तिरीयोपनिषदि अंभस्यनुवाके अणोरणीयान्महतो महीयानात्मागुहायां निहितोऽस्यजंतोरिति परमात्मानं प्रकृत्य 'सप्तप्राणाः प्रभवंति तस्मादित्यादिना प्राणादीनां तस्मादुत्पत्त्यभिधानप्रकरणे अयमजामंत्रः पठ्यते; अतस्सर्वेषां परमात्मसकाशादुत्पत्त्यभिधान प्रकरणपठित निरुक्तमंत्रोक्ताऽजाशब्दवाच्या प्रकृतिरपि परमात्मन उत्पन्नैवेति निश्चीयते। ततश्च तत्सरूपे श्वेताश्वतरमंत्रेऽपि सैव ब्रह्मकार्यतया ब्रह्मात्मिका प्रकृतिरभिधीयत इति निर्णीयत इति।तदिदं जगदुपादानभूतायाः प्रकृतेर्ब्रह्मात्मकत्वं कापिलतंत्रे ईश्वरप्रतिक्षेपेण निराकृतम् । तथाच सांख्यदर्शने प्रथमाध्याये सूत्रं—ईश्वरासिद्धेरिति १-९२ सन्निकर्षजन्यत्वघटित प्रत्यक्षलक्षणस्येश्वरप्रत्यक्षेऽव्याप्तिशंकापरिहाराय प्रवृत्तमिदं सूत्रम

अत्र पूर्वसूत्राददोष इत्यनुषज्यते । तथाच नित्यैश्वर्यवति प्रमाणाभावेन तदसिद्धेर्नोक्तदोषइति सूत्रार्थः । तथा जगदुपादानभूतायाः प्रकृतेरीश्वरप्रवर्तनेनैव महदाद्यात्मना परिणामः ब्रह्ममीमांसाप्रथमाध्यायचतुर्थपादे आनुमानिकाधिकरणे तदधीनत्वादर्थवदिति सूत्रेण समर्थितः। अत्र सूक्ष्मंतुतदर्हत्वादितिपूर्वसूत्रात्सूक्ष्ममित्यनुवर्तते । तस्यचाव्यक्तमित्यर्थः प्रधानमिति यावत् । ततश्चप्रधानं तदधीनत्वात् परमात्माधीनत्वात् परमात्माधीनस्वरूपस्थितिप्रवृत्तिकत्वादित्यर्थः अर्थवत्प्रयोजनवत् स्वकार्यमहदादिजनकं भवतीत्यर्थः । अयंभावः—परमात्मव्यतिरिक्तवस्तूनां सर्वेषां स्वरूपस्थितिप्रवृत्तीनां परमात्माधीनतया तत्प्रवर्तनेनैव प्रधानं महदाद्यात्मना परिणमते, तत्प्रवर्तन विरहेतु स्पंदितुमपि नक्षममिति । इदं च सूत्रं वेदांतिमते क्वचित्प्रधानाभ्युपगमः क्वचित्तत्प्रतिषेध इति व्याघातशंकापरिहारार्थं प्रवृत्तम् । ततश्च ब्रह्माधीनस्वरूपस्थितिप्रवृत्तिकत्वविरहेण सांख्याभ्युपगतस्य तस्य प्रतिषेधः तदधीनस्वरूपादिकस्य च तस्याभ्युपगमइति न व्याहतिरिति सूत्राशयः। इदंच प्रधानस्य ब्रह्माधीनप्रवृत्तिकत्वं सांख्यदर्शने अचेतनत्वेऽपि क्षीरवच्चेष्टितं प्रधानस्येति तृतीयाध्यायैकोनषष्टितमसूत्रेण दूषितम्। अत्रैवंभाष्यम्—नन्वचेतनस्य प्रधानस्य स्वतस्स्रष्टृत्वमेवनोपपद्यते रथादेः परप्रयत्नेनैव प्रवृत्तिदर्शनादिति तत्राह अचेतनत्वेऽपीति यथाक्षीरं पुरुषप्रयत्ननैरपेक्ष्येण स्वयमेव दधिरूपेण परिणमते एवमचेतनत्वेऽपि परप्रयत्नंविनाऽपि महदादिपरिणामः प्रधानस्य भवतीत्यर्थइति । एतेन व्याससूत्रेषु महता प्रयत्नेनासाधारण्येन कपिलमेव लक्षीकृत्य तन्मतनिराकरणेन तद्वत्कपिलसूत्रेष्वपि व्यासमेव लक्षीकृत्य तन्मतस्य निराकरणी-

त्वाच्च व्यास एव तत्र वादित्वेन पर्यवस्यतीति कल्पनं परास्तम् । उपदर्शितेन व्याससिद्धान्तासाधारणयोः प्रधान स्वरूप तत्परिणामप्रकारयो निराकरणेनैव व्यासमतस्य निराकृतत्वसिद्धे व्यासमतनिराकरणसिद्ध्यर्थं तत्सूत्रेष्वसूत्रित स्याऽप्यद्वैतादे र्व्यासमतत्वं परिकल्प्य तस्यवादित्वेन पर्यवसानकरणस्यात्यंतानुचितत्वात् । इदंपुनरिहावधेयम्—आनंदमयाधिकरणे आनंदमयोऽभ्यासादित्यनेन सूत्रेण तैत्तिरीयोपनिषदि आनन्दवल्ल्यां तस्माद्वाएतस्मात् विज्ञानमयात् अन्योंतर आत्मानन्दमय इत्यत्र श्रुत आनन्दमयः परं ब्रह्मेति निर्णीतं भगवतावेदव्यासेन । अनेनैवाद्वैतिवेदान्तिमतंव्यासानभिमतामिति सुगमंनिरूपकाणाम् । तन्मतेह्यानंदमयस्य जीवत्वमेवांगीक्रियते न ब्रह्मत्वम् । सूत्रकारैस्तु आनन्दमयस्यैव ब्रह्मत्वंस्फुटमभिधीयते । अद्वैतिवेदान्तिभिस्तु स्वमतस्य सूत्रारुढत्वसंपादनाय ब्रह्मसूत्राणि व्याकुर्वद्भिः आनंदमयोऽभ्यासादिति सूत्रमित्थं व्याख्यातम्——आनन्दमय आत्मेत्यत्र ब्रह्मपुच्छं प्रतिष्ठेति वाक्ये उपदिष्टं ब्रह्म किमानन्दमयावयवत्वेन विवक्षितम् उत प्रधानत्वेनेति संशये सिद्धान्तमाह आनंदमयोऽभ्यासादिति । अत्रानन्दमयपदेन ब्रह्मपुच्छं प्रतिष्ठेतिवाक्योक्तं ब्रह्म लक्ष्यते तत् प्रधानत्वेन विवक्षितम् । तस्यैव असन्नेव सभवतीत्यनंतरश्लोके अभ्यस्यमानत्वादिति सूत्रार्थइति । अत्रेदृशार्थविवक्षायामानन्दमयइति पक्षनिर्देशस्सूत्रकृतां प्रमादादुन्मादादज्ञानादशक्तेर्वेति त एवप्रष्टव्याः । आकाशस्तल्लिंगात् ज्योतिश्चरणाभिधानात् प्राणस्तथानुगमादित्यादिषु सूत्रेषु साक्षात्स्वशब्देनपक्षंनिर्दिशतांतेषामत्र परमानंदमयइति लाक्षणिकपदेन तन्निर्देशेहि कारणांतरंनोपलभामहे । अपराण्यपि सू-

त्राणि यथासंभवंपुच्छवाक्यनिर्दिष्टस्य ब्रह्मणएवोपपादकानि द्रष्टव्यानीत्युपसंहारग्रन्थे यथासंभवमिति वदद्भिस्तैरेव सूत्रस्वारस्योल्लंघनं स्फुटीकृतम् ॥

अनेनैव स्थालीपुलाकन्यायेन परेषां तत्र तत्र सूत्रे सूत्राऽभिप्रायसंवरणं स्वाभिप्रायनिवेशनंच द्रष्टव्यम्। तदेवमद्वैतमतसिद्धार्थस्य शारीरकशास्त्रे क्वचिदप्यसूत्रितत्वात्प्रत्युत सूत्रस्वरसपर्यालोचने तस्य सूत्रकृदनभिमतत्वावगमाच्च नाविद्यातोऽपीत्यादिषु कापिलसूत्रेषु व्यासमतमेवानूद्यदूष्यतइति कल्पनं कुकल्पनमेव। तत्सिद्धं सूत्राक्षरस्वारस्यान्महाभारतैकार्थ्याच्च श्रियःपतिर्नारायणः परंतत्त्वम्, अप्राकृतदेशविशेषे तत्सायुज्यप्राप्तिरेवाऽपुनरावृत्तिलक्षणमोक्षपुरुषार्थइति शारीरकमीमांसाप्रणेतु भगवतोवेदव्यासस्य सिद्धान्त इति ॥

सजयतु वेदव्यासस्सचजयतु चिरायलक्ष्मणमुनीन्द्रः ॥
याभ्यां प्रतारकेभ्योव्यपनीय भयं त्रयी परित्राता ॥
निस्सीमज्ञानसंपद्वितरणचणयावात्स्यगोपालसूरेः
दृष्ट्याश्रीरंगरामानुजमुनिचरणांभोजयोस्सेवयाच ।
देवेभक्त्या चहस्तामलकितभगवद्व्याससिद्धान्तइत्थं
सम्यक्प्राचीकशत्तंविबुधजनमनः प्रीतयेदेशिकार्यः ॥



ग्रन्थोऽयं द्रविडेषु लब्धजनुषा श्रीवेङ्कटाद्रेस्तटो
पान्ते सद्गुणवारिधे स्तनुभुवा गोपालविद्वन्मणेः
श्रीमद्देशिकसूरिणा विरचितस्सद्देशिकानुग्रहा
न्छीलःवाहशकोपविंश (१८५०) शतकस्याऽर्धान्तिमे वत्सरे ॥

इति श्रीमहामहोपाध्यायदेशिकाचार्यविरचिते
श्रीव्याससिद्धान्तमार्तण्डे चतुर्थः परिच्छेदः ॥

ग्रन्थश्चसमाप्तः